## मूल्यप्रेषणसूचना—

२७ तमवर्षीयस्य पत्रिकाङ्कस्य वार्षिकं मूल्यमद्यावधि विभागे बहुभिर्ग्राहकैर्न प्रेषित-मिति निवेद्यन्ते ते वार्षिकमूल्यप्रेषणाय।

सम्पादकः—

## लेखकेभ्यो निवेदनम्—

'सारस्वती सुषमा' इति पत्रिकायां नूतनतथ्याविष्कारका नूतनतथ्येन स्पष्टीकृततथ्या वाऽनुसन्धाननिबन्धाः प्रकाश्यन्ते। ते सम्पादकः, 'सारस्वती सुषमा' वाराणसेयसंस्कृत-विश्वविद्यालयः, वाराणसी—२ इति सङ्केतेन प्रेषणीयाः सुधीभिः।

प्रकाशितनिबन्धस्य मुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च साऽङ्को दीयते लेखकाय, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवतीति।

सम्पादकः

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**श्रीव्रजभूषणत्रिपाठी**, साहित्याचार्यः, एम० ए०



---

२७ वर्षे

१ अङ्कः

वार्षिकमूल्यं १० रूप्यकाणि

प्रत्यङ्कमूल्यं ३ रूप्यकाणि

## वाराणसेयसंस्कृतविश्वविद्यालयस्य विशिष्टं प्रकाशनम्

१. तन्त्रसंग्रहः (तन्त्रविषयकः) प्रथमोभागः, सवृत्तिका विरूपाक्षपञ्चाशिका, सटीका साम्बपञ्चाशिका, सव्याख्यं त्रिपुरामहिम्नस्तोत्रम्, स्पन्दप्रदीपिका, अनुभवसूत्रम्, वातुलशुद्धाख्यतन्त्रम्—एतेषां षट्तन्त्राणामस्मिन् संग्रहो वर्तते।
सम्पादकः—म० म० प० गोपीनाथकविराजमहोदयः। १६.००

२. तन्त्रसंग्रहः (तन्त्रविषयकः), द्वितीयो भागः, निर्वाणतन्त्रम्, तोडलतन्त्रम्, कामधेनुतन्त्रम्, फेत्कारिणीतन्त्रम्, ज्ञानसंकलिनीतन्त्रम्, सवृत्तिको देवीकालोत्तरागमश्च—एतेषां षट्तन्त्राणां संग्रहः।
सम्पादकः—म० म० प० गोपीनाथकविराजमहोदयः। १७.००

३. काव्यप्रकाश (अलङ्कारशास्त्रम्)—श्रीगोकुलनाथोपाध्ययविरचितविवरणसहितः। प्रथमतः पञ्चमोल्लासपर्यन्तः।
सम्पादकः—कविशेखरश्रीबद्रीनाथझाः। ८.००

४. विज्ञप्तिमात्रतासिद्धिप्रकरणद्वयम्—आचार्यवसुबन्धुप्रणीतम्। तत्र विंशतिका स्वोपज्ञवृत्तियुता, त्रिंशिका स्थिरमतिकृतभाष्यसहिता, ते च गूढार्थदीपनीव्याख्याऽनुवादसहिते।
सम्पादक-व्याख्याकारानुवादकौ—थुबतनछोगड्डुप् शास्त्री, प० रामशंकरत्रिपाठी। ३६.२५

५. न्यायसिद्धाञ्जनम् (विशिष्टाद्वैतम्) वेदान्तदेशिकविरचितम्, श्रीनीलमेघाचार्येण हिन्दीभाषायामनूद्य सम्पादितम्। २५.००

६. पाणिनीयधातुपाठसमीक्षा–प्रणेता–डॉ० भागीरथप्रसादत्रिपाठी 'वगीशः शास्त्री'। २८.६०

# विषयसूची

१. सम्पादकीयम्— क

२. पाणिनीयं व्याकरणं भाषाविज्ञानं च-- ... .... .... १
डॉ० रामप्रसादत्रिपाठी

३. उपादानार्थकः √ग्रह् ( ग्रह ): अर्थविज्ञानम्-- ... .... .... ७
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

४. उपसर्गाणामैतिहासिको भाषाशास्त्रीयश्चार्थविकासः— .... .... १८
श्रीहरिश्चन्द्रमणित्रिपाठी

५. शिववायुपुराणयोर्महापुराणत्वसमीक्षा— ... .... .... ५१
डॉ० श्रीकृष्णमणित्रिपाठी

६. आयुर्वेदस्य पारम्पर्योपदेशः— .... ... .... ६४
प० विद्याधरशुक्लः

७. गरुणपुराणविषयानुक्रमणी— .... ... .... ९२
श्री मध्वाचार्यः

# संपादकीयम्

षड्विंशहायने तृतीयतुरीयाङ्करूपो रजतजयन्तीविशिष्टाङ्को यथानिश्चयं सज्जीकृत्य प्रकाशितः, संभावितश्च भवद्भिर्हृदयालुभिः सुषमोपासकैरित्याकलय्य प्रसीदति नश्चेतो नितराम्। संप्रति सप्तविंशहायनीयमनुसन्धानसामग्रीसंभृतमङ्कमिममनुसन्धित्सूनामुपकाराय अन्तर्वाणीनां प्रीणनाय च संप्रस्तुवतामस्माकं जायते प्रकामं प्रमोदः। अनुसन्धानप्रधानेयं पत्रिका परम्परागतसंस्कृतविदुषामनुसन्धानप्रवृत्तेरालोचनाप्रवृत्तेश्च जागरणाय संप्रवृत्तेति विभाव्य तादृशानां निबन्धानामिह प्रकाशनं साधीयः समाश्रूयते समीहितसिद्धये। अङ्केऽस्मिन्नशेषा निबन्धाः समालोचनगवेषणाप्रवृत्तिद्योतका इत्यनिर्बन्धं विज्ञापयितुकामा वयम्।

पुराणानि भारतीयसमुदाचारस्य न्यासरूपाणि विश्वकोशपदवीमुपारूढानि चेति कस्य विपश्चिदपश्चिमस्येदमविज्ञातम्। भूगोल-खगोल-न्याय-निरुक्त-व्याकरण-मीमांसा-सांख्य-योगायुर्वेद-प्रभृतीनां शास्त्राणां निधानभूतानि तानीति निश्चित्य सर्वेषामनुसन्धित्सूनां जिज्ञासूनां च हितकाम्यया पूर्वप्रतिज्ञानुसारं पुराणविषयानुक्रमणिकायाः क्रमिकस्य प्रकाशनस्योपक्रमो जातोऽस्मिन्नङ्के पर्यन्ते। आद्येयं गरुडपुराणविषयानुक्रमणी नाम।

गवेषणाप्रधानपत्रिकासु प्रकाशितानां संस्कृतपालिप्राकृतभाषागतविषयसंबद्धानां निबन्धानां सूचीप्रकाशनप्रक्रमोऽग्रिमेष्वङ्केषु क्रमशो भविष्यतीत्यवधेयं पाठकमहाभागैः। 'चयनिका' इति शीर्षकेणेह प्रवर्तितचरः स्तम्भः साम्प्रतं पुनरारभ्यत इति नेदं प्रत्यग्रमनुष्ठानमास्माकीनमिति।

## सुस्वागतम्

वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिपदमलङ्कुर्वतां अत्रभवतां **श्रीमतां बलरामोपाध्यायमहाभागानां** सविधे सुस्वागतवचांस्युच्चारयन्ती प्रफुल्लिता सगद्गदा चेयं नाम 'सारस्वती सुषमा' न स्वात्मनि परितोषमेति।

इतः पूर्वमिमे १९५५ ईशवीयतः १९६१ ईशवीयपर्यन्तं प्रयागस्थोच्चन्यायालयस्य प्रमुखन्यायाधीशपदं सुशोभयन्तो भारतीयसंविधानाधृतन्यायसङ्गतैर्निर्णयैर्भारतीयजनताजनार्दनस्य सांविधानिकीमभूतपूर्वां सपर्यां सम्पादितवन्तः।

सम्माननीया इमे आङ्ग्लभाषाया सर्वोच्चपरीक्षोत्तरणानन्तरम् 'एल्० एल्० बी०' कक्षायां 'कॉम्पनी ला' इत्यस्य विशिष्टमध्ययनं स्वकीयविशिष्टप्रतिभापूरेण सम्पूर्य चतुर्विंशहायनीय एव लघुवयसि ( १९२५ ईशवीयहायने ) 'कोर्ट आफ बार' इत्यस्य सदस्यतामगृह्णन् ।

आङ्ग्लभाषाभाषणलेखननिरता अपीमे काशीस्थनागरीप्रचारिणीसभेति नाम्ना बहु प्रथिताया राष्ट्रभाषाप्रचारकारिण्याः संस्थाया सदस्यतां स्वीकृत्य स्वराष्ट्रभाषाभाषणप्रचारणविषयणी प्रीतिञ्च प्रकटितवन्तः । सहैव प्रयागस्थमहिलाविद्यापीठस्य कुलपतिपदमप्यदीदिपन् प्राक्कालिककुलपतिसेवाभावनानैपुण्येन विद्यापीठं संस्कुर्वन्तः ।

प्रयागस्थोच्चन्यायालयप्रदत्तैरेषां महत्त्वपूर्णैर्निर्णयैः प्रभावितेन सर्वकारेण मान्यानामेषां नियोजनं १९६२ ईशवीयहायने चण्डीगढस्थैकलसदस्यन्यायाधीशपदेऽकारि । साकमेव गभीरव्यक्तित्ववितानविस्तारितविधिसम्मतधिषणाधिष्ठिताः श्रीमन्तः काशिकहिन्दुविश्वविद्यालयीयशिष्टपरिषत्कार्यकारिणीपरिषदोश्च कार्यधूरङ्गीकृत्य स्वगतोच्चशिक्ष्यसंस्कारदृढभावनाभावितशिक्षाचैतन्यमुद्दङ्कितवन्तो महाभागाः ।

समग्रैरुल्लिखितैः क्रियाकारित्वैश्च समेधिता ह्येते १.११.७१ ईशवीयहायनीयतिथौ प्राचीनशिक्षैककेन्द्रस्यागणितबुधविबुधतपोभूमेः वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिपदे सन्नियोजिताः । समुद्भावयन्ति चैते वाराणसेयसंस्कृतविश्वविद्यालयस्य सर्वदिग्भाविनीं समुन्नतिं स्वप्रतिभापिहितसंस्कारसंस्कृतवंशानुगताभिजात्येन ।

एतदतीव प्रसन्नताकरं यत्ते हिन्दुसंस्कृतिसंस्कारसंरक्षणे सक्रियरूपेणानवरतं निरताः । विश्वहिन्दुपरिषदा साकमेतेषां न केवलमौपचारिक एव सम्बन्धोऽपितु रचनात्मकैः सम्बन्धो वरीवर्ति । संस्थयैतयेषां साहाय्यमवाप्य कानिचिन्महत्त्वपूर्णानि कार्यजातानि विहितानीतिं सुप्रथितमेवास्ते ।

विश्वसिमि यज्ज्ञानविद्यावयोवृद्धा न्यायप्रिया विद्वद्वरेण्या मान्या उपकुलपतिमहाभागा विश्वविद्यालयेऽस्मिन् काममपि नूतनां संस्कारपरिष्कारसरणिमुद्भाव्य विशिष्टज्ञानदीपसमुद्दीपने सुमहत्कार्यं सम्पादयिष्यन्ति नूनमिति ।

## श्रद्धाञ्जलयः

वाराणसेयसंस्कृतविश्वविद्यालयस्य प्राचीनव्याकरणागमदर्शनविभागस्याध्यक्षाः सेवानिवृत्त्यनन्तरं चास्य विश्वविद्यालयस्य सम्मानितप्राध्यापकाः डॉ० श्रीदेवदत्तशर्मोपाध्याय-

महाभागाः २०२८ तमस्य वैक्रमवर्षस्य शारदपूर्णिमायां भुवमिमां विहाय स्वर्गता इति ज्ञापयतामस्माकं चेतसस्तत्त्वं निरतिशयं खेदमनुभवति ।

श्रीमन्त उपाध्यायमहाभागा १५.१०.१९०६ ईशवीये वर्षे अलीगढमण्डलान्तर्गते भमसोई-ग्रामे जन्म लेभे । स्वकीये ग्राम एव प्राथमिकीं शिक्षामावप्यैते संस्कृतवाङ्मयस्य गभीराध्ययनाय नरवरस्थसंस्कृतमहाविद्यालयेऽनन्तरं च स्वर्गीयश्रीशुद्धबोधतीर्थमहाशयानां संरक्षणे ज्वालापुरस्थे गुरुकुले गत्वा सुयोग्येभ्यो गुरुवरेभ्यो व्याकरणवेदान्तायुर्वेदादीनि शास्त्राणि सम्यक्कृतवन्तः । विरालसीस्थिते गुरुकुलमहाविद्यालये, हरिद्वारस्थे गुरुकुलकाङ्गडीसंस्थायाम्, मुरादाबादस्थे ऋषिकुले च तैः क्रमेणाध्यापनं कृतम् । १९४३ तम ईशवीये वर्षे एषां नियुक्तिः श्रीकाशिकराजकीयसंस्कृतमहाविद्यालये दर्शनाध्यापकपदे पश्चाच्च दर्शनप्राध्यापकपदे जाता । १९५८ तम ईशवीये वर्षे च यदा श्रीकाशिकराजकीयसंस्कृतमहाविद्यालयो वाराणसेयसंस्कृतविश्वविद्यालयरूपेण परिवर्तितोऽभवत्, तदैतेषां नियोजनं प्राचीनव्याकरणागमदर्शनविभागस्याध्यक्षपदेऽकारि विश्वविद्यालयाधिकरिभिः । श्लाघनीयं पदमिममलङ्कुर्वतामेषां सन्निधौ समागत्यानेके च्छात्रा व्याकरणादीनि शास्त्राणि सम्यगधीत्य भाषणलेखनादिकलाप्रवीणताञ्चावाप्य भारतभुवः प्रतिकोणङ्गताः सन्ति ।

एतदतिरिक्तमेतेषां कार्यक्षेत्रमेकमन्यदपि सुप्रथितम् । आजीवनं त आर्यसमाजस्य सामाजिकरूढिसंशोधनमूलया क्रान्तिकारिण्या चान्दोलनविचारधारया प्रभाविता आसन् । तेनैवैत आर्यसमाजनिधिव्यवस्थापितानामनेकासां संस्थानामाजीवनसदस्यरूपेण सचिवाध्यक्षादिरूपेण च विचारदक्षाणामार्यसामाजिकानां युवकानां मार्गनिर्देशने तत्परधियोऽभूवन् । गुरुकुलकाङ्गडी-ज्वालापुरगुरुकुलाद्यार्यसामाजिकसंस्थाभिः साकं तेषामतीव गाढः सम्बन्ध आसीत् । जिज्ञासुप्रकृतिका इमे सदैव नवनवां ज्ञानदीप्तां दृष्टिमवाप्तुं प्रयत्नशीला समभूवन् । अत एव बहुव्यतीतायामप्यवस्थायामिमे तत्त्वपरिशुद्धिनामकं महत्त्वपूर्णं ग्रन्थं सम्पाद्य १९६७ तम ईशवीये वर्षे 'पी० एच० डी०' इत्युपाधिमाप्तवन्तः ।

तेषां प्रकाशिता ग्रन्था :—

१—तत्त्वपरिशुद्धिः

२—सन्धिविषयः

३—अष्टाध्यायीभाष्यम् ( १-३ अध्यायपर्यन्तम् )

विद्वद्वरेण्यैरेभिर्मीमांसादर्शनस्योपरि हिन्दीभाषाभाष्यमपि विलिखितम्। प्रत्याख्यानसंग्रहस्य सम्पादनमपि समापाद्येतैर्महानुभावैः।

अधोलिखिता ग्रन्थास्तेषामप्रकाशिताः—

१—नामिकः

२—वैयाकरणभूषणसारः ( हिन्दीभाष्यम् )

३—धातुपाठः

प्रसन्नताया विषयोऽयं यत्तेषां सन्ततिरपि संस्कृताध्ययने निरता।

तेऽद्यास्मासु पाञ्चभौतिकरूपेण न सन्ति, किन्तु तेषां सरलः स्वभावः, सौहार्दभावः सदाध्ययनप्रवृत्तिश्च तेषामभावं विदूरीकरोत्विति भगवन्तो भूतभावनः प्रार्थ्यते शब्दपुष्पश्रद्धाञ्जलिभिरेतैरिति।

—–o—–

# सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२७ वर्षः || ज्येष्ठपूर्णिमा, सं० २०२९ || १ अङ्कः


## पाणिनीयं व्याकरणं भाषाविज्ञानं च


डॉ० रामप्रसादत्रिपाठी

प्रा० व्या० आ० द० विभागाध्यक्षः, वा० सं० वि० वि०


आधुनिका भाषाविज्ञानविदो वर्णानां संख्याविषये, स्थानप्रयत्नविषये कालविषये चात्र व्याकरणशास्त्रे तत्सहचरेषु शिक्षाशास्त्रेषु च बहुविधानाक्षेपान् कुर्वन्ति। तत्र संख्याविषयका इमे आक्षेपा यत् पाणिनीयव्याकरणे 'ऋ-लृ' इत्येतौ स्वतन्त्रौ वर्णौ स्वीकृतौ स्तः, तयोः स्वीकारो न युक्तः। रेफ एव इकारस्य मात्रां लकाररेफयोश्च स्वरस्य मात्रां मेलयित्वा एतयोः स्वरूपं निष्पद्यते। एवमेवेदृशा बहवो वर्णाः सन्ति, येषां निर्देशो व्याकरणशास्त्रे नास्ति। यथा—'कपड़ा-घोड़ा-घड़ा' इत्येतेषु भाषाशब्देषु यो ड़कारः प्रयुज्यते, स आक्षरसमाम्नायिकडकाराद् विभिन्न एव[१]। अनुभूयते च प्रत्यक्षत एव द्वयोर्वैलक्षण्यम्। एवं मराठी-नैपाली-पारसीप्रभृतिषु भाषासु 'च-छ-ज़-ख़-क़' इत्यादीनां वर्णानामप्युच्चारणभेदाद् भेद एवेति वर्णसंख्यायां न्यूनता संस्कृतवाङ्मये। एवं यैः स्थानादिभिर्येषां वर्णानामुच्चारणं व्याकरणादिशास्त्रे कथितम्, तेषां तैरेव स्थानादिभिरुच्चारणं न भवतीति यन्त्रेषु परीक्ष्य निर्णीतमस्तीति प्रत्यक्षपरीक्षणेन सर्वं स्थानादिनिरूपणं कल्पनामात्रमेवेति।

---

१. द्रष्टव्यम्—भाषाविज्ञान, भोलानाथ तिवारी, पृ० १४६।
 „ भाषा-विज्ञान की रूपरेखा, उ० ना० तिवारी, पृ० २१६–२१७।

एतेषामाक्षेपाणां क्रमशः समाधानानि अधस्ताल्लिख्यन्ते—

१—'ऋ-लृ'विषयकमुच्चारणं यादृशं करणीयं तादृशमुच्चारणं कर्तुं ये न शक्नुवन्ति, न वा जानन्ति, नापि वैदिकानां सम्प्रदाये क्रियमाणं यथावदुच्चारणं शृण्वन्ति, स्वयं च रि-शब्दवद् ऋकारमुच्चारयन्ति, त एवैतद्विषये इत्थमाक्षिपन्ति। तैश्च महानुभावैर्ध्वनिपक्षे इदमानेयं यदयम् ऋवर्णः सम्पूर्णोऽपि मूर्धन्यः, रिशब्दो न पूर्णतया मूर्धन्यः, अपि तु मूर्धस्थानापेक्षया तालुस्थानस्याधिको व्यापार इति द्वयोर्वैलक्षण्यं बोध्यम्। अत एव ऋणशब्दघटक-ऋकारस्य, हरिशब्दघटक-रिशब्दस्योच्चारणं केनचिद् वैदिकेन क्रियमाणं श्रूयेत, तदा एतद् वैलक्षण्यं स्पष्टमेव निश्चीयेत। अतोऽत्र मात्रायोजनया न किमपि कर्त्तुं शक्यते।

किञ्च, दधि + ऋणम्, होतृ + ऋणाम्, कृष्ण + ऋद्धिरित्यादिषु यण्दीर्घगुणादयः कथं प्रवर्तेरन्? किञ्च, वेदेऽपि कृष्णादिपदे ऋकारस्योदात्तादिस्वरः कथं स्यादिति विभाव्यतां सूरिभिः।

२—आधुनिकभाषासु 'ड़-ज़-छ़-ख़' इत्यादीनामनेकेषां वर्णानां व्याकरणादावनिर्देशाद् निरूपणं न्यूनताया अपि तुच्छमेव। व्याकरणशास्त्रे शिक्षाशास्त्रे च यावन्तो वर्णा निर्दिष्टाः सन्ति, तावन्त एव वर्णाः साधवः। यथैकस्यैव शब्दस्य बहवोऽपभ्रंशा भवन्ति, तथैकस्यैव वर्णस्य वर्णान्तरप्रभावेण स्थानप्रयत्नादिषु तारतम्येन वा नानाविधाः सम्भवन्ति। उपर्युक्ता 'ड़-ज़' इत्यादयो वर्णा अपीदृशा सङ्करसृष्टिभूता एव। तेषां परिगणनं कर्तुं कः किमर्थं प्रयतेत?

किञ्च, वर्णोच्चारणे स्थानविवर्णितम्, निष्पीडितम्, ग्रस्तम्, अर्धकम्—इत्यादिदोषनिरूपणद्वारा एते सर्वेऽपि वर्णानां प्रकारा महाभाष्ये शिक्षाशास्त्रे च ध्वनिताः। यथा सङ्गीतशास्त्रे मूलभूता सप्तैव स्वराः, तेषामेव 'कण्-मीड़' इत्येवमाख्या अनन्ताः प्रकारा अनुभूयन्ते। तद्वद् वर्णानां विषयेऽपि तत्तद्दोषमूलका नानाप्रकाराः सम्भावनीयाः, का हानिः?

३—"अथातः सम्प्रवक्ष्यामि वाच उच्चारणे विधिम्" इति शिक्षावाक्येन इदं बोध्यते यदेतेन स्थानेन, एतेन प्रयत्नेनायं वर्ण उच्चारणीयः, तथैव तस्य साधुत्वं नान्यथा। भाषाविज्ञानवादे तु स्वस्वोच्चारणप्रकारेण यस्य वर्णस्य यादृशमुच्चारणं क्रियते तादृशमेवोच्चारणमनुसृत्य तत्तद्वर्णस्य स्थानादिकं यन्त्रपरीक्षया निर्णीयते, अनुभूयते च देशकालादिभेदेन कण्ठताल्वादिभेदेन चैकस्यैव वर्णस्य नानाविधमुच्चारणम्। तदेव स्वैर-

मुच्चारणं यन्त्रेण परीक्ष्यते। व्याकरणेन शिक्षाशास्त्रेण तु तत्तद्वर्णस्य तत्तत्स्थानं विधीयते। अतोऽपि ज्ञायतां यत् स्वेच्छया सम्भावितमन्यथोच्चारणं यदि प्राप्तं न स्यात्, तदा वाच उच्चारणे विधिः कथं सम्भवेत् ? इत्थं च द्वयोर्न कोऽपि विरोधो लक्ष्यते।

४—वर्णोच्चारणकालविषयेऽपि अस्ति भूयान् भ्रमो भाषाविज्ञानवासितान्तःकरणानाम्, येन शिक्षाशास्त्रे व्याकरणशास्त्रे च महानाक्षेपस्तैः क्रियते। तथाहि वर्णानामुच्चारणे यावान् काल उपयुज्यते, स एव 'मात्रा' इत्युच्यते। यन्त्रेषु परीक्षणे कृते यद्यपि तस्य कालस्यानेकधा विभागाः सम्भवन्ति, तथापि सामान्यतः [1]पञ्चधाऽभ्युपेयते विभागः—ह्रस्वार्धम्, ह्रस्वः, दीर्घः, ईषद्दीर्घः, प्लुतश्चेति। व्याकरणशास्त्रादिषु त्वर्धमात्रा, ह्रस्वः, दीर्घः, प्लुतश्चेति चतुर्विध एव स्वीकृत इति न्यूनता। एवं तैर्व्यञ्जनविषयेऽपि बहुविधः कालविभागः कृतः।

ह्रस्वस्योच्चारणे यावान् कालोऽपेक्ष्यते ततो द्विगुणो दीर्घोच्चारणे, त्रिगुणश्च प्लुतोच्चारणे इति याऽऽर्षप्रणाली सा नाद्रियत एभिर्यन्त्रपरीक्षकैः। तैस्तूच्यते दीर्घे ह्रस्वापेक्षया न द्विगुण एव समयः, अपि तु क्वचिद् न्यूनः, क्वचिदधिकोऽपि। अत एव ईषद्दीर्घ इत्यपि वर्णकालविभाग उक्तः। एवमेव प्लुतोच्चारणेऽपि न त्रिमात्राकालो नियतः। अतिदूरतः सम्बोधनेऽन्त्यस्वरस्य प्लुतस्य त्रिमात्राकालादधिक एव कालः प्रयोगेऽनुभूयते। एवं व्यञ्जनविषयेऽपि बहुविधः[2] कालविभागस्तैः कृतोऽस्ति। अत्र तु व्यञ्जनं चार्धमात्रिकमिति सामान्येनार्धमात्राकाल एव समेषां व्यञ्जनानामित्यप्यस्ति न्यूनता इत्येवमाक्षेपा व्याकरणस्य शिक्षाशास्त्रस्य च रहस्यानवबोधमूलका एवेति निश्चितं वक्तुं शक्यते। यतश्च साधुत्वेन स्वीक्रियमाणानां वर्णानां कियान् काल इत्येव भारतीयशास्त्रेषु निर्णीतमस्ति। न तु कस्यां स्थितौ कस्य वर्णस्य ( ध्वनेः ) कियान् कालः सम्भवतीति।

यच्च पञ्चविधकालविभागेन शास्त्रीयकालविभागे न्यूनत्वं दर्शितम्, तदपि न समीचीनम्। न ह्यस्माकं शास्त्रे चत्वार एव वर्णकालाः स्वीकृताः सन्ति, अपि तु 'परमाणु-अणु-पादमात्रा-अर्धमात्रा-मात्रा-सपादमात्रा-द्विमात्रा-त्रिमात्रा' इत्येवंरूपेण नानाविधा वर्णकालाः स्वीकृताः सन्ति[3]।

---

१. भाषा-विज्ञान भोलानाथ तिवारी, सन् १९७१, पृ० ३०८।

२. तदेव, पृ० ३०९।

३. सर्वशिक्षासंग्रहः।

यद्यपि व्यञ्जनविषयेऽर्धमात्रातो न्यूनाधिककालसम्भावनया भारतीयशास्त्रस्यापूर्णत्वं प्रदर्शितम्, तदपि शशशृङ्गायमाणमेव प्रतिभाति। यतो हि व्यञ्जनानामर्धमात्राकालतो न्यूनेऽधिके वा कालेऽप्युच्चारणं भवेन्नाम, का हानिः? अस्माकं शास्त्रविद्भिस्त्वर्धमात्राकाल उच्चारितानामेव तेषां साधुता (शास्त्रीयता) अभ्युपेयते, नान्यथेत्येव तात्पर्यम्। न ह्यस्य वर्णस्य (ध्वनेः) इयत्येव काल उच्चारणं भवतीति भारतीयशब्दशास्त्रज्ञैर्नियम्यते, किन्तु यस्य वर्णस्य इयति काले उच्चारणम्, तस्यैव तच्छब्देन व्यपदेश इत्येव बोध्यते। यथा य एकमात्रिकः, स एव ह्रस्वपदेन व्यपदेश्यः सन् व्याकरणादिशास्त्रेषु साधुः, यश्च ततो न्यूनाधिकमात्रः, सोऽपि स्वरो भवतु नाम, किन्तु भारतीयशास्त्रे ह्रस्वपदेन तस्य व्यवहारो न भवति। एवं दीर्घादिविषयेऽपि बोध्यम्।

इत्थं चास्मिन् स्थाने इयता कालेनैतेन प्रयत्नेनोच्चार्यमाणश्चेदयं वर्णः साधुः सन् शास्त्रे व्यवहार्य इत्येवंरीत्या तत्तद्वर्णानां लक्षणानि निरूपितानि। प्राचीनशास्त्रेषु लक्षणकथनेनैव लक्ष्यस्य सम्यङ्निर्णयो भवति।

एतावतापि—वर्णानां लक्षणभूते स्थानकालादिविषये यदि संतोषो नानुभूयते, तदा तदेवोत्तरं युक्तं प्रतिभाति। यच्च तस्मै मनीषिणे देयं स्यात्, यः सादृश्याद् गर्दभं गवयं वा गामेव मत्वा तत्र 'सास्नावत्त्वं गोर्लक्षणमव्याप्तम्' इत्युद्घोष्य शास्त्रज्ञान् शिष्टानुच्चैरधिक्षिपेत्। किं चाधुनिकभाषाविज्ञानोक्तनियमानामपूर्णतापि दृश्यते। यथा वर्गीयद्वितीय-चतुर्थवर्णानां स्थाने हकारस्योच्चारणं भवति, किन्तु हकारस्य स्थाने वर्गीयद्वितीय-चतुर्थवर्णा न भवन्तीत्यस्ति तत्रत्य एको नियमः[१]।

अत्र कतिपये बाधका उपस्थाप्यन्ते—

(१) दाहशब्दः संस्कृतभाषीयः, तस्य प्राकृतभाषायां 'दाघ' इत्युच्चारणं क्रियते, एवम् 'इह'शब्दस्य 'इघ' इति प्रयोगः।

(२) 'नहुष' इति संस्कृतस्य पालिभाषायाम् 'नघुष' इति प्रयोगो भवति।

(३) चीनदेशीयभाषायां 'होम' शब्दस्यार्थे 'घोम'शब्दः प्रयुज्यते।

(४) संस्कृतस्य 'गुहा'शब्दस्याद्यतन्यां हिन्दीभाषायां 'गुफा' इति प्रयोगो भवति।

---

१. भाषाविज्ञान—डॉ० मङ्गलदेवशास्त्री, प्र० संस्क०, पृ० १८२।२, अष्टाध्यायी, ८।४।६२।

(५) पञ्चाम्बुदेशीया गुरुमुखीभाषा--तत्र 'सिंह'शब्दस्य 'सिंघ' इति प्रयोगो दृश्यते। इत्थं बाधकेषु सत्सु तत्र कथं विश्वासः कर्त्तुं शक्यते ? अस्माकं शास्त्रे तु 'वाग्घरिः' इत्यादिप्रयोगेषु हकारस्य स्थाने चतुर्थं घकारादिमादिशन् स्वीयं प्राचीनभाषाविस्त्वं सुष्ठु सूचयति भगवान् पाणिनिः।

## वैदिकभाषायामपि तेषामाक्षेपाः

किं बहुना,

(१) वैदिकसंस्कृतभाषाविषयेऽपि इमेऽप्रतिमप्रतिभावन्तो विद्वांसः शान्ता नावतिष्ठन्ते।

तत्र तेषामयमुद्गारो यत् संस्कृतभाषाया, अन्यासां च कासाञ्चिद् भारतीयभाषाणां कासाञ्चिद् वैदेशिकभाषाणां च मूलभूता एकातिप्राचीना अन्या एव भाषा आसीत्, यत इमाः सर्वाः प्रादुर्भूताः सन्ति।

सा च भाषा तैर्भारोपीय-शब्देन व्यपदिश्यते। संस्कृतादिभाषासु शब्दानां किञ्चिन्मात्रं सादृश्यं दृष्ट्वा[१] आसां भाषाणां मूलभूता काचिदन्या भाषाऽवश्यं भवितुमर्हति। यथा संस्कृतभाषायाम् 'हंस' इति शब्दः, आङ्ग्लभाषायां 'गूज' इति, जर्मनभाषायां 'गंस' इति उच्चार्यते। अत्र 'हंस-गंस' शब्दौ समानौ, परन्तु हकारगकारयोर्न तथा सादृश्यम्, यथा अनयोर्द्वयोरपि घकारेण सादृश्यमित्युभयोरपि शब्दयोर्मूलभूतः 'घंस'शब्द आसीदित्यान्यर्थमेव तैरियं भाषा कल्पितास्ति। अस्या भाषाया अकारः संस्कृतभाषायामेकाररूपेण, एतत्पारिवारीयास्वन्यासु कासुचिद् भाषास्वकारात्मनैव चोच्चार्यत इत्येवं ध्वनिपरिवर्तनमपि बहुधा कल्पितमिति।

(२) अत्रेदमालोचनीयं यत्तस्या भाषायाः किं स्वरूपमासीत् ? कदा तस्या अस्तित्वमासीदित्यादिप्रश्नेऽद्यावधि न किमपि प्रामाणिकमुत्तरं दीयते तैस्तदीयैर्वा। तत्तद्भाषीयशब्दानां परस्परं सादृश्यरूपं यत् प्रमाणमुपस्थाप्यते, तदप्यकिञ्चित्करमेव। ईदृशा बहवः सन्ति पदार्था लोके येषामितोऽप्यस्त्यधिकं सादृश्यम्, परन्तु तेषां मूलमेकं न कल्प्यते। यथा कार्पासः पटः, कौशेयः पटः, और्णेयश्च पटः श्वेतः, समानपरिमाणः शरीरावरणेन शैत्यापनोदक इत्येवंरीत्या समानोऽपि नह्येकमूलप्रसूतः।

(३) भारोपीयभाषीयः 'घंस'शब्द एव संस्कृते 'हंस'रूपेण, जर्मनभाषायां 'गंस'-रूपेण परिणत इत्यपि कथनं बालप्रवञ्चनामात्रमेव, यतो गौराङ्गसाम्राज्यकाले भारतवर्षे

१. भाषाविज्ञान भोला०-सन् १९७१, पृ० १२६-२७।

हिन्दुशास्त्रप्रतिपादकः 'हिन्दू ला' इत्यभिधान एको ग्रन्थ आसीदाङ्गलभाषायाम्, ग्रन्थोऽयम् 'गेन्दू ला' इति शब्देन संकेत्यते स्म। नह्यत्रोभयोर्मूलभूतः कश्चिद् घकारघटितः शब्द आसीत्, किन्तु हकारस्यैव गकाररूपेऽपभ्रंशो जात इत्येव कल्प्यते। तथैव 'हंस-गंस' इत्यनयोरपि स्थितिर्विचारणीया। किं प्रयोजनं 'घंस'शब्दकल्पनेन, तद्घटितभारोपीयभाषा-कल्पनेन वा? किञ्च, 'घंस'शब्दे भवतां स्नेहाधिक्यं वर्तते चेत्, तर्हि 'हंस' इत्यस्यैव मध्ये परिणामो 'घंस' इति, तदनु 'गंस' इति, इत्येव कुतो न कल्प्यते? हकारस्य घकारादिवर्ग-चतुर्थरूपे परिणामेऽनुपदमेव वर्तमानभाषाप्रयोगाः प्राचीनाचार्यसम्मतिश्च प्रमाणतयोपन्यस्ता एव। स च 'घंस'शब्दो जर्मनभाषीयस्य 'गंस' इत्यस्य प्राक्तनं रूपमिदानीं लुप्तं तव भारोपीयभाषीयवत्।

(४) अपि च 'मातृ-पितृ-दुहितृ'प्रभृतीनामनेकेषां शब्दानां संस्कृतभाषायां 'माता-मातरौ; पिता-पितरौ; भ्राता-भ्रातरौ' इत्यादीनि रूपाणि दृष्ट्वा भाषान्तरेषु 'माई-मादर-मदर, पिता-पेदर-पितर-फादर, भाई-विरादर-ब्रदर, धिया-दुख्तर-डॉटर' इत्यादीनि रूपाणि दृष्ट्वा च को न वक्तुं क्षमेत यत् संस्कृतं प्रकृतिः, भाषान्तराणि तत्परिणामभूतानीति।

## मन्त्रार्थविचारेऽप्याक्षेपाः

मन्त्राणामर्थकरणेऽपि तेषां प्रकारो विपरीत एव। यथा "न यातव इन्द्र·······माशिश्नदेवा अपि गुर्ऋ॑त नः" इति मन्त्रे 'शिश्नदेवा' इति पदं लिङ्गपूजापरतया व्याख्यायते भाषाशास्त्रविद्भिः पाश्चात्त्यैर्भारतीयैश्च[१]। तद्भारतीयप्रणालीविरुद्धमेव। नह्युक्त-स्थले देवशब्द इष्टदेवपरः, अपि तु 'शिश्नोदरपरायणः'। 'शिश्नोदरतृप' इत्यादयः शब्दा यथा आत्मम्भरिपुरुषप्रतिपादकाः, तथास्यापि शब्दस्य व्यवहार इति परम्परानुशीलनेन ज्ञातुं पार्यते। यास्कसायणाभ्यां तथैवाब्रह्मचर्यरूपेऽर्थेऽयं शब्दो व्याख्यातोऽस्ति।

(२) एवमेव—"कस्मै देवाय हविषा विधेम" इति मन्त्रे 'किं'शब्दः प्रजापतिरूपेऽर्थे गृहीतः सायणाचार्येण, शतपथब्राह्मणेऽपि 'किं'शब्दस्य प्रजापतिरूपोऽर्थो दर्शितोऽस्ति। अन्यत्रापि 'किं'शब्द उक्तेऽर्थे प्रसिद्ध एव। तं च सायणाभिमतं प्रसिद्धं परम्परासम्मत-मप्यर्थं दूषयन्ति प्रमाणाभासैः। उपक्रमोपसंहारादिषड्विधलिङ्गैरर्थनिर्णयः कर्तव्य इत्यादि-मीमांसाशास्त्रानुशीलितामर्थनिर्णयप्रणालीमजानन्त एव ते मन्त्राणामर्थनिर्णयेऽपि दत्तहस्ता भवन्तीत्यहो आश्चर्यम्।



१. चतुर्वेदभाष्यभूमिका-भूमिका, प० बलदेवोपाध्यायकृता।

# उपादानार्थकः √ ग्रह् ( ग्रह ) : अर्थविज्ञानम्

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसंधानसंस्थानसंचालकः, वा० सं० वि० वि०

ग्रह् ( ग्रह ) ९।६१ उपादाने ( उ )। वोपदेवस्त्वादान इत्याह। अस्य धातोः √ गृह् ( गृहू ) १।६४२, <ग्लह् ( ग्लहू )—तुल० पाणि० अ० ( ३, ३, ७० ) इत्याभ्याम्, अदनार्थकाभ्यां ग्रस्-ग्लस् इति धातुभ्यां च संबन्धः। वेदेषु गृभ् इत्यपि प्रकृतिः, सा च प्राथमिकी। भकारस्य वकारोऽवेस्ताभाषायां 'गरवनाति' इति, नवीनपर्सियनभाषायां च फकारः—ग्रिफत < सं० गृभीत—इति। संस्कृतभाषायां तु भकारस्य हकारत्वेन विकासः, विष्णुपुराणे ( २, ३ ) 'भव्य' इति राज्ञो नामधेयं नैषधमहाकाव्ये ( ११, ३७ ) 'हव्य' इति लभ्यते।

१. आदानं परिग्रहः स्वीकरणं ग्रहणमित्यनर्थान्तरम्। ऋग्वेदे ( ७, ४, ३ ) 'अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे' इत्यत्र 'यम् = अग्निम्, मर्तासः = मनुष्याः, जगृभ्रे = परिगृह्णन्ति' इति प्रसङ्गः। 'तं मे जगृभ्र आशसो नविष्ठं दोषा' ( ५, २, ११ ) इत्यृग्वेदे 'जगृभ्रे = गृह्णन्तु = स्वीकुर्वन्तु' इति सायणः। 'किं स्विन्नो राजा जगृहे' ( १०, १२, ५ ) इतीहर्ग्वेदे 'राजा = दीप्यमानोऽग्निः, नः = अस्माकं स्वभूतानि हवींषि स्तुतीश्च जगृहे = परिगृह्णीयात्' इत्याकूतम्। एवमेव 'तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत्' ( ऋ० १, १४५, २ ), 'अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि' ( ऋ० १०, १०३, १२ ) इत्युभयत्रापि स्वीकारोऽर्थो ग्रह्धातोः। हिन्दीभाषायामपि √ ग्रह इति धातुः प्रतिज्ञायाम् = स्वीकारे प्रयुज्यते—'बाँह गहे की लाज' इति। वा० रा० ( १, ७५, २ )—

> तदद्भुतमचिन्त्यं च भेदनं धनुषस्तथा।
> तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम्॥

इत्यत्र 'गृह्य = गृहीत्वा' इत्यर्थः। यद्यपि स्वीकरणमात्र ग्रहणम्, तथापि तत्रापि भेदा भवन्ति विविधाः। धनुर्ग्रहणे हस्तसंयोगानुकूलव्यापारः। अग्नेर्ग्रहणं तथा न संभवति। अग्निना हविषो ग्रहणं नामात्मसात्करणम्, स्तुतिग्रहणं नाम मनसा प्रतिश्रवः।

मनसा ( ऋ० १, १४५, २ ) ग्रहणे शारीरेण केनाप्यङ्गेन संयोगानुकूलव्यापारो भवितुं नार्हति। अङ्गानां ग्रहणं ( ऋ० १०, १०३, १२ ) नाम तेषामेकीभाव इत्यग्रेऽपि समुन्नेयम्।

२. 'गृभाय जिह्वया मधु' ( ऋ० ८, १७, ५ )। तुल० अवेस्ता—'गउर्वय ( <गृभाय ) इति। जिह्वया मधुनो ग्रहणं नाम समास्वादो लेहनं वा। ग्रहणमिति नास्ति विशिष्टो व्यापारः। किन्तु यादृशयादृशकर्मकरणादीनां संनिधानेन तादृशतादृशो भवति विशिष्टोऽर्थः।

३. ऋ० ( ६, ७२, ४ )—

इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः॥

इतीह मन्त्रे वक्षणासु रुशद्ग्रहणं नाम धारणम्। वक्षणासु=ऊधःसु, रुशत्=शुक्लवर्णं पयः, जगृभथुः=यथा पृथिव्यां स्वयं न क्षरति तथा धारितवन्तावित्यर्थः। महाभारते ( १, ११५, ९ ) 'ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत्' इत्यत्र गर्भमधारयद् आहितवतीत्यर्थः। वा० रा० ( १, ६६, १६ ) 'न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा' इत्यत्र भिन्नप्रकारकं धारणम्।

४. ऋ० ( १, १९१, १३ )—

नवानां नवतीनां विषस्य रोपुषीणाम्।
सर्वासामग्रभं नामारे अस्य अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार॥

इति मन्त्रे नवतीनां रोपुषीणां नाम्नो ग्रहणं नामोच्चारणम्। उच्चारणं विना नाम्नो ग्रहणं न संभवति। अत एव सायणोऽपि व्याख्यत्—नवानां नवतीनाम्=नवाधिकानां नवतिसंख्याकानां नदीनाम्, विषस्य=अस्मद्व्यापकस्य सर्वस्य विषस्य, रोपुषीणाम्=लोपयित्रीणां छेत्त्रीणाम्, सर्वासाम् उक्तानां गङ्गादिनदीनां नाम अग्रभम्=गृह्णामि संकीर्तयामीति। मनु० ( ५, १५७ ) 'न तु नामापि गृह्णीयात्' इत्यत्र कुल्लूकभट्ट उच्चारयेदित्यर्थमाह। नैषध० ( १४, ३२ ) —'देव्याः श्रुतौ नेति नलार्द्धनाम्नि गृहीत एव त्रपया निपीता' इत्यत्र नामपदसांनिध्यादुच्चारणमर्थो ग्रह्धातोः। प्रकाशकारोऽप्यत्रानुकूलः। नैषध० ( २१, १११ ) 'लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य' इत्यत्र 'गृह्णते= उच्चारयन्ति' इति प्रकाशटीका, कीर्तयन्तीति जीवातुः।

५. यत्र मुष्टिग्राहं गृह्यते, तत्र दृढं ग्रहणम्। ऋग्वेदे (१, १६२, २; ९, १, ६; ७, १०४, ८) इत्यादौ, मनु० (८, २८३) 'केशेषु गृह्णतः' इत्यत्र, (११, १००) 'गृहीत्वा मुसलम्' इत्यत्र, 'ग्रहाय व्यजनं चैव' (हरि० २, ६६, १४) = गृहीत्वा (नी०) इत्यत्र च तादृशोऽर्थः। 'स्कन्धेनादाय मुसलम्' इत्यत्र तु वहनरूपः स्थापनरूपो वार्थ आदानस्य। नक्रादिवाचकस्य 'ग्रहः' इति शब्दस्य दृढग्रहणकारणादेव तदर्थे प्रयोगो ज्ञेयः।

६. न्युपसर्गपूर्वको ग्रह्धातुर्निग्रहार्थको भवति। निग्रहो नाम निरोधो बन्धनं वा। गीतायाम् (६, ३५)—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥

इत्यस्य श्लोकस्य पूर्वार्द्धे मनसो दुर्निग्रहता चलता च वर्णितेत्युत्तरार्द्धे 'गृह्यते' इत्यनेन निगृह्यते = निरुद्ध्यते इत्यर्थः स्फुटीभवति (द्र० शाङ्करभाष्यम्)। महाभारते (८, १३, ३७)—

स शरौघार्दितो नागो भीमसेनेन संयुगे।
गृह्यमाणोऽपि नातिष्ठद् वातोद्धूत इवाम्बुदः॥

इत्यत्र नागस्य = हस्तिनो हस्तादिना ग्रहणं न सिध्यतीति निग्रहोऽर्थो बोद्धव्यः। नीलकण्ठेनापि 'गृह्यमाणः = निगृह्यमाणः' इति व्याख्यायि। भाग० पु० (९, २४, ३६) 'दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत्' इतीहापि निग्रहरूपेऽर्थे वर्तते ग्रह्धातुर्न्युपसर्गाद् ऋतेऽपि। महाभारते (३, ५३, १६) 'वने विचरतां तेषामेकं जग्राह पक्षिणम्' इत्यत्र 'दृष्ट्वा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे' इत्यत्र च निग्रहोऽर्थः।

७. वा० रा० (२, ३९, २१)—

न कुलं न कृतं विद्या न दत्तं न च संग्रहः।
स्त्रीणां गृह्णाति हृदयम् अनित्यहृदया हि ताः॥

इत्यत्र, मृच्छकटिके (१, ५०)—

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते।
हृदये गृह्यते नारी यदिदं नास्ति गम्यताम्॥

इत्यत्र च प्रतिबन्धरूपोऽर्थो ग्रह्धातोः। तिलकटीकायामस्योल्लेखः।

८. वा० रा० (२, १२, २८)—

सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा।
गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः॥

इत्यस्य श्लोकस्य ग्रहधातुर्वशीकाररूपेऽर्थे दर्शनीयः। इह प्रतिबन्धं विनापि ग्रहणमस्ति। प्रतिबन्धे तु नैष प्रकारः। तिलकटीकायां वशीकरोतीत्यर्थ इह साधु संगच्छते। एवमेव 'अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः' ( मभार० १३, ३६, ८ ), 'लुब्धमर्थेन गृह्णीयात्' ( चाण० ३३ ), 'माधुर्यमीष्टे हरिणान् ग्रहीतुम्' ( रघु० १८, १३ ) इत्यादिषु वशीकार-रूपोऽर्थो विलसति। यद्यपि वशीकरणं निग्रहान्तर्गतमेव, तथापि सूक्ष्मतादर्शनार्थमिह पृथग् विवेचनं कृतम्। इतोऽपि सूक्ष्मता त्वस्मदीये 'उपसर्गार्थविज्ञानम्' इति ग्रन्थे विलोकनीये-त्यलम्।

६. वा० रा० ( १, ६१, २३ )—

गवां शतसहस्रेण शुनःशेपं नरेश्वरः।
गृहीत्वा परमप्रीतो जगाम रघुनन्दनः॥

इत्यत्र गवां शतसहस्रेण शुनः शेपस्य ग्रहणं नाम क्रयः, मूल्यद्वारा सामान्यग्रहणस्या-भावात्। पञ्चतन्त्रे ( ५, ९ ) 'ततस्तेन मयाऽजाद्वयं ग्रहीतव्यम्' इत्यत्र रूपकाणां शतेनाजा-द्वयस्य ग्रहणं नाम क्रयः।

१०. हरिवंशपुराणे ( ३,२६,१५ )—

स तं दण्डं समुचितं निर्विकारं समाहितम्।
ब्रह्मा जग्राह विधिना अन्तर्धानगतः प्रभुः॥

इत्यत्र समुचितस्य निर्विकारस्य समाहितस्य = असुरेषु निपातितस्य च दण्डस्य विधिपूर्वकं ब्रह्मद्वारा ग्रहणं नामानुमतिः। तदाह नीलकण्ठः 'जग्राह = अनुमेने' इति।

११. हरिवंशपुराणे ( ३, २४, १३ )—

यस्य नैव श्रुतं ब्रह्मन् न गृहीतं विशाम्पते।
कामं तं धार्मिको राजा शूद्रकर्माणि कारयेत्॥

इह श्रुतं न 'गृहीतम् = अनुष्ठितम्' इति नीलकण्ठः।

१२. ऋ० ( १, १३६, १० ) 'जगृम्भा दूरआदिशं श्लोकमद्रेरध त्मना' इत्यत्र दूरदेश आदिक् = आदेशो यस्य तादृशस्य श्लोकस्य = वाचो ध्वनेर्वा ग्रहणं नाम श्रवणम्। रघु० ( ११,१५ ) 'ज्यानिनादमथ गृह्णती तयोः' इत्यत्रापि ज्यानिनादस्य ग्रहणेन श्रवण-मभिप्रेयते। मल्लिनाथोऽप्याह—'तयोर्ज्यानिनादं गृह्णती = जानती, शृण्वतीत्यर्थम्' इति। 'न चक्षुषा गृह्यते' ( मुण्डकोप० ३, १, ८ ) इत्यत्र, 'चक्षुषा गृह्यते रूपम्' इत्यादौ च दर्शनमर्थः।

**१३.** कस्यचिदात्मीयजनस्य दूरदेशादागमने यद् ग्रहणं तत् स्वागतम्। हिन्द्याद्या-धुनिकभाषासु 'बरात लेना' इत्यस्यार्थः जन्ययात्रिकाणां स्वागतम्। वाल्मीकीयरामायणे (१, ७७, ११; १२) श्रीरामादीनां चतुर्णां पुत्राणां विवाहानन्तरमयोध्यागमने सति कौसल्यादिभिर्वधूनां ग्रहणम् = स्वागतं कृतम्—

ततः सीतां महाभागामूर्मिलां च यशस्विनीम्।
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः॥

'गृहीतोऽनन्यभावेन यत् त्वया हरिरीश्वरः' इति भाग० पुराणे (३, ५, १९) मैत्रेयस्योक्तिः सूतं प्रति। इहापि स्वागतं पूजा वार्थो ग्रह्धातोः।

**१४.** उपसमुपसर्गपूर्वकस्य ग्रह्धातोरर्थोऽभिवादनम् = पादपतनपूर्वकं प्रणामः (तिलकटीका, वा० रा० २, २०, २१; मन्वर्थ० २, १३२)। उपसमुपसर्गौ विनापि प्रणतिरूपोऽर्थो लभ्यते मनुस्मृतौ (२, ७१) 'पादौ ग्राह्यौ गुरोः सदा' इत्यत्र। पादयोर्ग्रहणे भवन्त्यनेकानि प्रयोजनानि। शत्रुः पादं गृहीत्वा पातयति, नापिताऽलक्तकमायोजयितुं करोति तथा। एवं तावद् पादयोर्ग्रहीतुर्गृहीतपादस्य च संबन्धं विचार्य जायतेऽर्थस्य स्पष्टता। शिष्यद्वारा गुरोः पादग्रहणेन प्रणतौ तात्पर्यम्, तादृशपरम्परानिर्वाहात्।

**१५.** ग्रह्धातुर्ज्ञानार्थे प्रसिद्धः, ज्ञानेन भवत्यात्मसात्करणम्, न तु कण्ठस्थीकरणेन। अयमर्थ उभयथा लभ्यते—उपपदसन्निधानेन स्वातन्त्र्येण च। वा० रा० (१, २२, १३) 'मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा' इत्यत्र ग्रह्धातुर्ज्ञानार्थः। रघु० (५, ५९) 'उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्' इत्यत्रापि ज्ञानार्थो ग्रह्धातुः। उभयत्रैव मन्त्रशब्द उपपदरूपेण प्रयुक्त इति तत्सांनिध्येन तादृशस्यार्थस्यावगमः सुकरः। 'एवमात्मनि गृह्यतेऽसौ' (१, १५) इति श्वेताश्वतरोपनिषदि, 'पदोत्तरपदं गृह्णाति' (४, ४, ३९) इति पाणिनीये सूत्रे, 'मासमधीतोऽनुवाको न चानेन गृहीतः' इति काशिकायाम् (२, ३, ६), 'सकृदुक्तं न गृह्णाति' इति पञ्चतन्त्रे (२, १८०) च ज्ञानार्थको ग्रह्धातुः। मालविकाग्निमित्रे (षट्चत्वारिंशे पृष्ठे) 'देवि, श्रूयताम्। एवं जनो गृह्णाति' इत्यत्र साधारणो लोको यज्जानाति तच्छ्रूयतामिति शब्दार्थः। इह कस्याप्युपपदस्याभावेऽपि ग्रह्धातुर्ज्ञानार्थमभिव्यनक्ति। नैषध० (२, ६१) 'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इत्यत्र, (१६, ६१) 'अवादि वा यन्मृदु गद्गदं युवा तदेव जग्राह तदात्तिलम्भकम्' इत्यत्र चोभयत्र ग्रह्धातुरुपपदान्तरसाहायकं विना ज्ञानार्थकः। उभयत्र

प्रकाशजीवातुटीकाकारयोरैकमत्यम् । णिच्यपि तस्यैषोऽर्थः सुरक्षितः । भट्टि० ( २, ४२ ) 'अजिग्रहत् तं जनको धनुस्तद् येनार्दिदद् दैत्यपुरं पिनाकी' जनको राजा तं रामं तद् धनुः, अजिग्रहत् = बोधितवान् इत्यर्थः । इहाध्यापनरूपोऽर्थो नास्ति । प्राकृतभाषाया गहेइ (सण) इति प्रयोगो ज्ञानार्थकः ।

१६. महाभारते ( १, १६३, ३; ४; ५ ) भीमसेनो वकासुरवधाद् भीतान् राक्षसान् सान्त्वयामास समये = शपथे च न्यवेशयत्—युष्माभिर्भूयो न कर्हिचिद् मानुषा हिंस्याः, अन्यथा हिंसतां वध एवमेव शीघ्रं भवेदिति । तानि रक्षांसि तस्य तद्वचनं श्रुत्वा 'एवमस्तु' इति भीमसेनं प्राहुः समयं च जगृहुः—'एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम्' इत्यत्र ग्रहधातुः स्वीकारार्थोऽनुमोदनार्थो वेति जायते विचिकित्सा, स्वीकारानुमोदनयोः सूक्ष्मभेदस्य दुरनुसन्धेयत्वात् । कृतस्य कस्यचित् कार्यस्य प्रपुष्टिर्नामानुमोदनम्, यथा भागवते— 'भवता यद् व्यवसितं तन्मे साध्वनुमोदितम् ।' शाकुन्तलेऽपि 'श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः' इति । नेहानुमोदनरूपोऽर्थः, शपथस्य भीमसेनेनाकृतत्वात् । यद्यपि 'एवमस्तु' इत्यनेनाभ्युपगम एव, तथापि शपथस्योपपदत्वाद् ग्रह्धातुरत्र करणार्थकः— शपथं यथा स्यात् तथा गृहीतवन्तः = कृतवन्तः । शपथ एव तात्पर्यम्, ग्रह्धातुस्तु तत्र सामान्यक्रियावाचकः । एवमेव 'उपवासं तु गृह्णीयाद् यद् वा संकल्पयेद् व्रतम्' इति महाभारते ( १२, १२६, २० ) ग्रह्धातोरर्थ आश्रोतव्यः ।

१७. भाग० पु० ( १, २, १२ ) 'पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया' इत्यत्रानुष्ठितया भक्त्येति दर्शनाद् ग्रह्धातुरत्रानुमोदनार्थकः । श्रुतानुमोदितया भक्त्याऽऽत्मन्यात्मानं पश्यन्तीति तदर्थः । ज्ञानार्थो न युज्यते विधातुम्, श्रुतानुवर्तिभिः शास्त्रैर्वेदानुमोदितकर्मणामेव विधानात् । अयमर्थोऽनुमत्यर्थेन चरितार्थः ( दशमकण्डिकायां द्रष्टव्यः ) ।

१८. महाभारते ( २, ८१, ३६ )—

एवं गाल्वगणे क्षत्ता धर्मार्थसहितं वचः ।
उक्तवान् न गृहीतं वै मया पुत्रहितैषिणा ॥

इत्यत्र वचो ग्रहणं नाम श्रवणं नास्ति । श्रवणाभावे स्मरणस्यानुपपन्नत्वात् । लोकभाषायामपि 'वह मेरी बात नहीं सुनता' इतीह श्रवणाभावे तात्पर्यं नास्ति । यथोचितप्रभावाभावे श्रवणस्य नैष्फल्यमिति श्रवणमश्रवणमेव । यथोचितप्रभावे च श्रवणं वस्तुतः श्रवणमिति हृदि करणं नाम श्रवणम् । एवमेव महाभारते धर्मार्थसहितं वचो न गृहीतमित्यस्य 'न हृदि कृतम्' इत्याकूतम् । श्रीमद्भागवते ( ४, ६, ३२ )—

मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः ।
यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥

इति ध्रुवोक्तिः । 'तथ्यं नारदवचो नाग्राहिषम्' इत्यत्रापि ग्रह्धातोर्हृदि करणमर्थः, न तु श्रवणम् । महाभारते ( ७, ८१, १८ )—

तस्य मौर्वी च मुष्टिं च स्थानं चालक्ष्य पाण्डवः ।
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः ॥

इत्यत्र मन्त्रस्य श्रवणानन्तरं ग्रहणं नाम मनसि करणम् = अवधारणम् । मनु० ( ८, २६ ) 'गृह्यतेऽन्तर्गतं मनः' इत्यत्र अवधारणरूपोऽर्थो ग्रह्धातोः, अन्तर्गतमनःपदसंनिधानेन तादृशस्यैव बोधात् । शाकु० ( २, १६ ) 'परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः' इत्यत्र दुष्यन्तस्य विदूषकं प्रत्युक्तिः । परिहासविजल्पितस्य वचसः परमार्थेन ग्रहणम् = अवधारणम् इति ।

१९. महाभारते ( ३, २९५, १८ )—

गते पितरि सर्वाणि संन्यस्याभरणानि च ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥

यद्यपीह धारणरूपेणार्थेनैव गतार्थता, तथापि प्रतिवस्तु ग्रहणप्रकारभेदेनार्थभेदः । यष्टिग्रहणे तस्या हस्ते करणरूपप्रकारो भिन्नः । कुण्डलयोर्ग्रहणं नाम कर्णयोः संनिवेशनम् । चमसस्य ग्रहणं धारणप्रकारभेदमभिव्यनक्ति । लेखनीग्रहणेनापि करशाखानां योजनवैशिष्ट्यं लक्ष्यते । एवमेव वल्कलानां ग्रहणं नाम संनिवेशविशेषः । स च परिधानशब्देन ज्ञायते । गीतायाम् ( २, २२ ) 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि' इत्यत्र ग्रहणस्य तथैवार्थोऽभ्युपगन्तव्यः ।

२०. सोपसर्गाणां सर्वेषां धातूनां ते तेऽर्था उपसर्गविरहेऽपि धातूनां भवन्त्येवेति सिद्धान्तः । संपूर्वकस्य ग्रह्धातोः संग्रहरूपोऽर्थः । भाग० पु० ( ८, ७, २३ )—

सहायेन मया देवा निर्मन्थध्वमतन्द्रितः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥

इति भगवदुक्तिः । 'फलग्रहाः' इत्यत्र ग्रह्धातुः संग्रहार्थः ।

२१. मनु० ( ८, २७१ ) 'नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः' इत्यत्र नामग्रहस्य जातिग्रहस्योच्चारणमर्थो नास्ति, उच्चारणं विनापि नाम्नो जातेश्च तथा निर्देशः शक्यते कर्तुं येनाभिद्रोहोऽभिव्यज्येतेत्यत्र ग्रह्धातुर्निर्देशार्थः ।

२२. भाग० पु० ( ३, १६, २३ )—

न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यद् ऋषभस्य हि तत्प्रमाणम्॥

इत्यत्र पथिपदसंनिधानाद् लोकद्वारानुवर्तनमभिप्रेयत इति ग्रह्धातुरनुवर्तनार्थकः। 'मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' इति गीतायां स्पष्टमनुवर्तनप्रयोगः। 'जग्राह स द्रुतवराहकुलस्य मार्गम्' इति रघु० ( ९, ५९ ) 'अनुससार' इति मल्लिनाथः।

२३. 'जग्राह विद्याः प्रकृतीश्च पित्र्याः' इति रघु० ( १८, ५० ) विद्यानां ग्रहणं नाम स्वायत्तीकरणम्। 'परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचराः' इति नैषध० ( २, ९५ ) प्रकाशटीकायां स्वाधीनत्वरूपोऽर्थो ग्रहणशब्दस्य। जीवातुटीकायां त्वाक्रमण-ज्ञानरूपौ द्वावर्थौ दर्शिताविति संशयालुः सः।

२४. 'पटुरपि प्रियकण्ठजिघृक्षया' इति रघु० ( ९, ४६ ) आलिङ्गनार्थो ग्रह्धातुः। यद्यपि नानाविधान्युद्देश्यानि कण्ठग्रहणेन सिध्यन्ति मारणोपचारादिरूपीणि, तथापि प्रियशब्ददर्शनेन व्यापारभेदात् तथार्थः।

२५. 'यात्रां जग्राह' इत्यत्र नैषधे ( १७, १५९ ) ग्रह्धातोः प्रस्थानमर्थः, यात्रापदो-पादानात्। प्रकाशटीकाकारोऽप्याह—'प्रतस्थे' इति।

२६. 'गुणं गृह्णन्' इत्यत्र नैषधे ( १२, ९७ ) वर्णयन्निति प्रकाशटीकाकारः। यद्यपि गुणपदोपादानादेवेह वर्णनरूपोऽर्थः, तथापि संपूर्णप्रसङ्गमवधार्यैवार्थनिर्णयस्यौचित्यम्। महाभारते ( १४, ४३, २८ )—

धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया।
गुणानां ग्रहणं सम्यग् वक्ष्याम्यहमतः परम्॥

इत्यत्र ग्रह्धातुर्बोधपरः।

२७. 'अवश्यभव्येष्वनवग्रहग्रहा' इति नैषधे ( १, १२० ) आङुपसर्गपूर्वकस्य ग्रह्धातोराग्रहरूपार्थस्य प्रतिपादनम्। तदाह प्रकाशटीकाकारः 'अभिनिवेशः' इति। तत्रैव ( १७, ४४ ) 'येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः' इत्यत्राप्यभिनिवेशरूपोऽर्थो वेदितव्यो ग्रह्धातोः—ग्रहः = आग्रह इति। 'ब्रह्मन् ग्रहस्तवायं चेत् तत् करोमि वचस्तव' इति कथासरित्सागरः ( २४, १५७ )।

'मा स्म भूर्ग्राहिणी भीरु' इति भट्टि० (५, ९३) रावणोक्तिः सीतां प्रति। वस्तुतोऽत्राङुपसर्गपूर्वकस्य धातोरिवार्थ उपसर्गं विनैवेत्याग्रहकारिणी मा भूदित्यर्थः। स्वेतरपक्षाऽऽग्रहो नाम प्रातिकूल्यम्।

२८. 'नतसुग्रीवगृहीतसादराज्ञम्' इति भट्टि० (१०, ४३) प्रतिष्ठारूपोऽर्थो ग्रह्धातोः, सीताया अन्वेषणं कारयित्वा सुग्रीवेण गृहीता = प्रतिष्ठिता सादराज्ञा यस्य तम् इति प्रसङ्गात्। अत इह स्वीकारार्थो नोपयुक्तः।

२९. 'गृहाणैतासु मत्सरम्' इति भट्टि० (२०, २) सीतां प्रति हनूमदुक्तिः। एतासु = 'राक्षसीषु मत्सरं गृहाण' इति वाक्ये ग्रह्धातुर्जननार्थकः। मत्सरोत्पादनेन गृहीतक्रोधा सती त्वं तासां हननार्थं मामनुज्ञास्यसीति शेषः।

३०. किराता० (१०, ८) 'ऋतुरिव तरुवीरुधां समृद्धया युवतिजनैर्जगृहे मुनिप्रभावः' इत्यत्र 'युवतिजनैर्मुनिप्रभावो जगृहे' इति वाक्यात् कीदृशोऽर्थो ग्राह्यः ? तरुवीरुधां समृद्धावृतुप्रभावो निश्चितः। ज्ञानानन्तरं निश्चयः, न तु ज्ञानात् पूर्वम् इत्युपमेयमुनिप्रभावोऽपि निश्चितः, उपमानार्थदर्शनात्। एवं खलु ग्रह्धातुरिह निश्चयार्थकः।

३१. ग्रह्धातोर्णिजन्तप्रयोगेऽध्यापनरूपोऽर्थो विनोपपदेन नाभिव्यज्यते। महाभारते (३, ३२, ६१)—

नीतिं बृहस्पतिप्रोक्तां भ्रातॄन् मेऽग्राहयत् पुरा।
तेषां सकाशादश्रौषमहमेतां तदा गृहे॥

इत्यत्र बृहस्पतिप्रोक्तनीतेर्भ्रातॄनुद्दिश्य दानं नामाध्यापनम्, तादृशव्यापारस्याध्यापनरूपत्वात्। वा० रा० (१, ४, ६)—

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः॥

सः = वाल्मीकिः प्रभुः, तौ = कुशीलवौ, अग्राहयत् = अध्यापयदित्यर्थः। इह वेदोपबृंहणरूपप्रयोजनं समीक्ष्य ग्रह्धातोरध्यापनरूपो विशिष्टोऽर्थः। 'आचार्य आचारं ग्राहयति' इति निरुक्तम् (१, ४), मनु० (१, ५८)—

इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः।
विधिवद् ग्राहयामास............................॥

इत्यत्र चाध्यापनमेवार्थः, आचारशास्त्रपदरूपोपपदयोः संनिधानात्। महाभारते (१, १३२, ९)—

ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥

इत्यत्रास्त्रपदसंनिधानाद् ग्रहधातोरध्यापनमर्थो ज्ञायते । सर्वत्रोदाहरणेषु च द्विकर्मकता दृश्यते । तत्र 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (१,४,५२) इत्यनेन सूत्रेण बुद्ध्यर्थकधातूनामणिचि कर्ता णिचि कर्मसंज्ञको भवति । 'वेदमध्यापयद् विधिम्' इत्युदाहरणं प्रस्तूयते बुद्ध्यर्थकधातुप्रसङ्गे । इह ग्रह्धातोर्बुद्ध्यर्थकत्वादण्यन्तावस्थस्य कर्तुर्ण्यन्तावस्थायां कर्मसंज्ञा जायते । भाग० पुराणे ( १, ३, ४१; ३, ४, ३१; ५, ९, ५; ७, ५, २६ ) ग्रह्धातोरध्यापनार्थो द्रष्टव्यः । यद्यपि वस्तुतो ग्रह्धातुर्ज्ञानार्थपर इति णिचि ग्राहयतीत्यस्य बोधयतीत्यर्थ एव उचितः, तथापीहोपपदकारणादध्यापनमर्थः । भट्टि० (२,४२) 'अजिग्रहत् तं जनको धनुस्तत्' इत्यत्र विशुद्धो बोधरूपोऽर्थः ।

२२. पाणिग्रहणशब्दो विवाहार्थे रूढः । हस्तग्रहणं करग्रहणं वेत्यस्य प्रयोगस्य व्यवहारो विवाहार्थे न दृश्यत इति पाणिशब्देन सहैव रूढता ज्ञायते । रघु० ( १७,३ ) 'पाणिमग्राहयत् पिता' इत्यत्र मल्लिनाथेन त्रयोऽर्था दर्शिताः—१. अबोधयत्, २. स्वीकारितवान्, ३. उदवाहयच्चेति । पाणिनिसूत्रस्य (१, ४, ७७) व्याख्याकारैरुपयमनस्य स्वीकाररूपोऽर्थोऽपि स्वीकृतः । ग्रहधातोरर्थद्वयी तु मयैहैव प्रकरणे दर्शिता । पाणेः स्वीकरणं विवाहस्य मुख्यो विधिरिति स विवाहार्थे रूढो जातः । धातोः स्वीकारमात्रार्थात् 'अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कुमारसं. ( १, ५२ ) ग्राहयितुम् = परिग्राहयितुमित्यर्थः [ संजी० ] ।

२३. एवं तावद् विविधोपपदसंनिधानादसंख्याता अर्था विज्ञेयाः । प्रयुक्तास्तु यथायथं दर्शिताः । इतोऽप्यधिका दृश्यन्ते केचिदर्थास्ते संक्षेपत इहोपन्यस्यन्ते—'अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य' इत्यत्र ग्रह्धातोः पानमर्थः । 'प्रियंवदा नाट्येन सुमनसो गृह्णाति' 'सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णातीत्यादाववचयरूपोऽर्थः । तैस्तैरिन्द्रियैः सहास्य रूपरसगन्धस्पर्शादयोऽर्थाः । श्रीमद्भागवते (२, १०, २०; २१; २२; २३) चतुर्षु श्लोकेषु तादृशा अर्था विलोकनीयाः—'तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः', 'यदात्मनि निरालोकमात्मानं च जिघृक्षतः', 'निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः', 'कर्णौ च निर्भिद्येतां दिशः श्रोत्रं गुणग्रहः', 'जिघृक्षतस्त्वङ् निर्भिन्ना तस्यां रोममहीरुहाः' इति । चौर्यरूपोऽर्थो मनुस्मृतौ [ ९, २७७ ] 'छेदयेत् प्रथमे ग्रहे' इति । एवमेवान्येऽर्था

अप्यूह्याः। मम मतानुसारेण तु प्रग्रह-अनुग्रह-अवग्रह-विग्रह-उद्ग्राह-प्रभृतयोऽर्था अपि समुपलब्धाः स्युः संस्कृतवाङ्मये केवलस्य ग्रह्धातोः। अनुग्रहार्थसम्बन्धे मेदिनीकोशेऽस्ति निर्देशः। ग्रहः = पात्रम्, गृहम् = भवनम् इत्यादीनामप्यर्थो यथायथमूह्यः।

३४. ग्रहणार्थकाः* घ्रेभ्-, घेर्भ; घ्रेभा इति भारोपीयधातुभेदाः। पु० च० स्लाव० भाषायां रेखाकर्षणाद्यर्थे 'ग्रेति' इति प्रयोगः। एवमेव लिथु०–ग्रब्रोति, सेर्बोक्रो०-'ग्राब्रिति' इत्यादि-प्रयोगाः पूर्वोक्तेऽर्थे भवन्ति। चेकभाषायां 'ह्रब्रिति' इत्ययं प्रयोगः खनने [ तक्षणपूर्वक-चिक्कणे ], शम्बाकरणे चार्थे लभ्यते। कस्यचिदुपपदस्य सांनिध्येनैषोऽर्थः कालक्रमेण रूढः स्यात्। तदुपपदं हलादिरूपं भवेत्। अवेस्ताभाषायां संस्कृतवदेवार्थः—गेरेब्नाइति [ < वै० स० गृभ्णाति], 'गेउर्वयेइति' इति। पु० पर्सि० 'गर्बायैति' इति ग्रहणार्थे प्रयुक्तः। न० पर्सि० भाषायां तु निग्रहार्थको दृश्यते धातुः—'गैरैप्त ( gərəpt ) [ < गृभीत ] इति [ जूलि० पॉ० ४५५ पृ० ]। [ तुल० अधुनातनः 'गिरफ्तार' इति शब्दः ]।

एवं तावद् इह ग्रहधातोरर्थाः प्रायश्चत्वारिंशद् दर्शिताः—१. आदानम् ( स्वीकरणं परिग्रहो वा ), २. समास्वादः ( लेहनं वा ), ३. धारणम्, ४. उच्चारणम्, ५. दृढं ग्रहणम्, ६. निग्रहः ( निरोधः ), ७. प्रतिबन्धः, ८. वशीकरणम्, ९. क्रयः, १०. अनुमतिः, ११. अनुष्ठानम्, १२. श्रवणम्, १३. स्वागतम्, १४. पादपतनपूर्वकं प्रणामः, १५. ज्ञानम्, १६. करणम्, १७. अनुमोदनम्, १८. हृदि करणम् ( अवधारणम् ), १९. परिधानम्, २०. संग्रहः, २१. निर्देशः, २२. अनुवर्तनम्, २३. स्वायत्तीकरणम्, २४. आलिङ्गनम्, २५. प्रस्थानम्, २६. वर्णनम्, २७. अभिनिवेशः, २८. प्रतिष्ठा, २९. जननम्, ३०. निश्चयः, ३१. अध्यापनम्, ३२. विवाहः, ३३. पानम्, अवचयः, अघ्राणम्, दर्शनम्, स्पर्शः, चौर्यम्, ३४. रेखाकर्षणादि, खननम् इति।



# उपसर्गाणामैतिहासिको भाषाशास्त्रीयश्चार्थविकासः

हरिश्चन्द्रमणित्रिपाठी
अनुसन्धाता ( रिसर्च-फेलो ) वा० सं० वि० वि०

[ 'उपसर्गाणामैतिहासिको भाषाशास्त्रीयश्चार्थविकासः' इति विषयमधिकृत्य पूर्वार्द्ध-रूपेणैको निबन्धः पूर्वमेव प्राकाश्यं नीतः। तस्मिन् निबन्ध उपसर्गाणां विषये वैदिकवाङ्मये कीदृशं पदस्वातन्त्र्यमर्थस्वातन्त्र्यञ्चास्ति, कया रीत्या तैः स्वातन्त्र्येणार्थाभिव्यक्तिर्भवति, उपसर्गसंज्ञायाः कीदृश्यर्थेयत्ता भाषाशास्त्रीयदृष्ट्या वैदिकसाहित्ये वर्तते, भाषाया ऐतिहासिक-प्रवाहे केन-केन हेतुनोपसर्गाणामर्थसङ्कोचो विकासश्च सञ्जात इत्येतत् सर्वं भाषाशास्त्रीयं तथ्यं ऋग्वेदसंहितातो यास्कीयनिरुक्तपर्यन्तं प्रमाणपुरस्सरं विश्लेषितम्। उत्तरार्द्धतां भजमानेऽस्मिन् निबन्ध आपाणिनेर्यावदुपलब्धवैय्याकरणानां सिद्धान्ता ऐतिहासिकदृष्ट्या भाषाशास्त्रीय-दृष्ट्या चालोचयिष्यन्ते। अन्वयव्यतिरेकाभ्यामुपसर्गाणामर्थनिश्चायका वैदिकसन्दर्भा अपि प्रमाणत्वेन प्रस्तोष्यन्ते। ]

संस्कृतभाषोत्कर्षदृष्ट्या, भाषाशास्त्रदृष्ट्या, साहित्यदृष्ट्या विज्ञानदृष्ट्या च महामुनिपाणिनेः प्रतिभाकालो भारतीयसाहित्ये यादृश उत्कर्षभूत आसीद् न तादृशो भाषिकः, साहित्यिको वैज्ञानिकश्च प्रतिभाकालः कदाचिदपि भारतीयवाङ्मये प्रादुरभूत्। शब्दशास्त्र-विषये भाषाशास्त्रविषये च यादृश्या प्रतिभया यादृशं विज्ञानराशिमयं मुनिः प्रस्तौति, नोपलभ्यते तादृशी विमर्शप्रधाना प्रतिभा विश्वसाहित्ये। आधुनिकभाषाशास्त्रगवेषको बरो-महोदयो[1] महामुनिपाणिनेः कालं खीष्टाब्दात् पूर्वं पञ्चमशताब्द्यां प्रतिष्ठापयति। अन्यैराधुनिकानुसन्धातृभिरपि तत् समर्थितम्। पाणिनिसमये संस्कृतभाषायां ते सर्वेऽपि गुणा आसन् ये जीवन्तीषु भाषास्वपेक्ष्यन्ते। शब्दशास्त्रीयापि परम्परा पाणिनेः पूर्वं प्रौढतमा विशालतमा चासीत्। मुनिनानेनाष्टाध्याय्यां[2] भूयांसः शब्दशास्त्रपारङ्गताः शाब्दिका

---

❀ निबन्धस्यास्य पूर्वो भागः 'सारस्वती सुषमा' इति पत्रिकायाः २६ वर्षे, २ अङ्के प्रकाशितः।

1. The Sanskrit Language; P. 48; By T. Burrow.

२. "वा शप्यापिशलेः" ( अष्टा० ६-१-९२ ); "तृषिमृषिकृषेः काश्यपस्य" ( अष्टा० १-२-२५ ); "ओतो गार्ग्यस्य" ( अष्टा० ८-३-२० ); "इको ह्रस्वोऽङ्यो गालवस्य" ( अष्टा० ६-३-६१ ); "ई चाक्रवर्मणस्य" ( अष्टा० ६-१-१३० ); "ऋतो भारद्वाजस्य" ( अष्टा० ७-२-६३ ); लङः शाकटायनस्यैव" ( अष्टा० ३-४-१११ ). "सर्वत्र शाकल्यस्य" ( अष्टा० ८-४-५१ ); "गिरेश्च सेनकस्य" ( अष्टा० ५-४-११ ); "अवङ् स्फोटायनस्य" ( अष्टा: ६-१-१२३ ) इति।

नामोल्लेखपुरस्सरं सादरं स्मृताः। अष्टाध्याय्याः पर्यालोचनेनापि निष्कष्टुं शक्यते यद् विना विशालवैय्याकरणपरम्पराया एतादृशस्य प्रौढतमस्य विज्ञानसम्मतस्य च ग्रन्थरत्नस्य रचनायां कोऽपि शेमुषीधुरीणस्तथा साफल्यं लब्धुं न शक्नोति यथायं लब्धवान्। वस्तुतोऽष्टाध्यायीसदृशस्य ग्रन्थरत्नस्य प्रणयनं निरन्तरमनेकसहस्राब्दिपर्यन्तं विकसन्त्या भाषायाः परिणतिर्गण्यते।

वैदिकव्याकरणभूतानां तत्तत्प्रातिशाख्यानां कालनिर्णयेऽधुनाप्याधुनिकगवेषका विवदन्ते। भाषादृष्ट्या च प्रातिशाख्यानां कालः पाणिनेः पश्चादायाति, किन्तु विषयदृष्ट्या भाषाविश्लेषणदृष्ट्या च ते तद्वदेव प्राचीना भवितुमर्हन्ति यद्वद् वैदिकसंहिताः। प्रातिशाख्यानां विषयदृष्ट्या भाषाविज्ञानदृष्ट्या च समयः पाणिनेः पूर्वमेव सुस्थिरो भवति। विश्लेषणेनैतेन निष्कष्टुं शक्यते यत् पाणिनेः पूर्वं लौकिकसंस्कृतभाषाया व्याकरणातिरिक्तस्य वैदिकव्याकरणस्यापि वैज्ञानिकः प्रवाहश्चासीत्, येनाष्टाध्याय्याः प्रणयने पाणिनिः साफल्यमलभत। वस्तुतः शास्त्रीयसंस्कृतव्याकरणस्यान्तिमः सम्पादकः पाणिनिरासीत्। समर्थ्यत इदं तथ्यं [1]बरोमहोदयेन। अत एवाष्टाध्याय्यां तत्तत्स्थलेषु पाणिनिः [2]"बहुलं छन्दसि" "छन्दस्युभयथा" (अ० ६-४-५), "छन्दसि परेऽपि" (अ० १-४-८१), "लुङ्लङ्लृङ्क्ष्वडुदात्तः" (अ० ६-४-७१), "न माङ्योगे" (अ० ६-४-७४), "लोपः शाकल्यस्य" (अ० ८-३-१९), "अङ्गार्ग्यगालवयोः" (अ० ७-३-९९) इत्यादिसूत्राणां प्रणयने वैवश्यमन्वभूत्।

यद्यपि पूर्वनिबन्धे सङ्केतित आसीन्मया निरुक्तप्रणेतुर्यास्कस्य समयः, तथापि प्रसङ्गप्राप्तोऽयं विषयोऽत्रापि विश्लेषणमपेक्षते। नातिप्राचीनः पाणिनेरासीत् समयो यास्कस्य, तथापि नैतौ द्वौ समानकालिकौ। एकस्यावसानकालोऽपरस्याविर्भावकालत्वेन मन्यत आधुनिकैर्विद्वद्भिः[3]। यास्कीयनिरुक्ते प्रतिपादिताः शब्दशास्त्रीयाः सिद्धान्ता उपादानरूपेण गृहीता महामुनिपाणिनिना। इत्थं संस्कृतभाषाया अविच्छिन्नप्रवाहे शब्दशास्त्रीया विज्ञानसम्मता च या प्रोज्वलतमा परम्परा दृश्यते, तस्याः प्रतिष्ठापकत्वेन महामुनियास्कपाणिनी गण्येते।

---

1. 'Sanskrit Language; P. 49; By T. Burrow.
२. अष्टाध्यायी—२-४-३९; २-४-७३; २-४-७६; ३-२-८८; ५-२-१२२; ६-१-३४; ७-१-८; ७-१-१०; ७-३-९७; ७-४-७८।"
3. "The Commentary on these by 'Yaska,' Who is Probably not far removed from pāṇini in time......" [ Sanskrit Language, p. 48 ]

[1]यास्काचार्येण सम्पूर्णपदराशिश्चतुर्धा—नामरूपेण, आख्यातरूपेण, उपसर्गरूपेण निपातरूपेण च विभाजितः। यद्यपि निरुक्तेऽव्ययरूपविभागस्य महत्त्वं नाङ्गीकृतमस्ति, तथापि 'अव्यय'शब्दो नाविदितचर आसीत् तस्य, यतो हि 'दृष्टव्ययः', 'अव्ययः'—इति सामान्यरूपेण द्विविधपदविभागस्तु तदभिमत एवास्ति। आचार्यपाणिनिस्तु नाङ्गीकरोत्यानुपूर्वीरूपेण यास्कस्य पदविभागम्। तस्याष्टाध्याय्यां[2] तु सम्पूर्णपदराशिर्द्विधा विभक्तो दृश्यते—सुबन्तरूपेण तिङन्तरूपेण च। अव्ययशब्दा अपि सुबन्तत्वेनाभिमतास्तस्य, किन्त्वव्ययशब्दानामवान्तरपदविभागस्तु चतुर्धैव दृश्यतेऽष्टाध्याय्याम्[3]—निपातरूपेण, उपसर्गरूपेण, गतिरूपेण कर्मप्रवचनीयरूपेण च। पाणिनितन्त्रे तूपसर्गाः सर्वथा पारिभाषिकार्थकत्वेन गृह्यन्ते। अयमेवासीत् स कालः, यस्मिन् भाषाया ऐतिहासिकप्रवाहेऽविच्छिन्नरूपेण स्वातन्त्र्यं भजमानानामुपसर्गाणां स्वातन्त्र्यमपह्नुतं पाणिनिना। वस्तुतो भाषाशास्त्रदृष्ट्या भाषासौन्दर्यदृष्ट्या चेयं परिभाषा—"उपसर्गाः क्रियायोगे" ( अ० १-४-५८ ) अस्वाभाविकी चासीत्। परिभाषयाऽनयोपसर्गा महदपकृताः। बहून्येतादृशानि स्थलानि सन्त्यष्टाध्याय्यां यत्र स्वयं पाणिनिः "उपसर्गाः क्रियायोगे" अस्याः परिभाषाया निर्वाहं न करोति। [4]"उपसर्गादध्वनः", [5]"उपसर्गाच्छन्दसि धात्वर्थे", [6]"उपसर्गाच्च", [7]"उपसर्गात् स्वाङ्गं ध्रुवमपर्शु", [8]"द्व्यन्तरुपसर्गेभ्योऽप ईत्", [9]"उपसर्गाद् बहुलम्" इत्येतानि सूत्राणि सन्ति निदर्शनानि, यत्र-सर्वत्राक्रियावाचिशब्दानां योग उपसर्गशब्दस्य प्रयोग उपलभ्यते। तेषु सूत्रेषु सर्वत्रोपसर्गशब्दः प्राद्युपलक्षणत्वेन व्याख्यातस्तद्व्याख्यातृभिः।

---

१. "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च।" ( निरु० १।१ )।

२. "सुप्तिङन्तं पदम्" ( अ० १-४-१४ )।

३. "चादयोऽसत्वे" ( अ० १-४-५७ ); "प्रादय उपसर्गाः क्रियायोगे" ( अ० १-४-५८ ); "गतिश्च" ( अ० १-४-५९ ), "कर्मप्रवचनीयाः" ( अ० १-४-८२ )।

४. "अध्वशब्दस्याक्रियावचनत्वात् तं प्रत्युपसर्गसंज्ञाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्।" (पदमञ्जरी—अ० ५-४-८५ ); "उपसर्गश्चात्र न गत्युपलक्षणम्, क्रियायोगाभावात्" (न्यासः—अ० ५-४-८५ )।

५. "क्रियावाची शब्दः प्रादीनां वत्यन्तानां प्रयोगे न प्रयुज्यते" (न्यासः—अ० ५-१-११८ )।

६. "उपसर्गग्रहणं प्राद्युपलक्षणम्, नासिकां प्रति क्रियायोगाभावात्" ( पदमञ्जरी—अ० ५-४-११९ )।

७. "स्वाङ्गं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्" ( पदमञ्जरी—अ० ६-२-१७७ )।

८. "अप्शब्दं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्" ( काशिका—अ० ६।२।९७ )।

९. "नसादेशस्याक्रियावाचित्वात् तं प्रत्युपसर्गत्वं न सम्भवतीति प्राद्युपलक्षणार्थमेतदुपसर्गग्रहणं विज्ञायते" ( न्यासः—अ० ८-४-२८ )।

आचार्यपतञ्जलिकात्यायनकैयटनागेशादिभिरपि–[१]"गतिश्च", [२]"एकविभक्ति चापूर्वनिपाते", [३]"समर्थः पदविधिः", [४]"भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इत्यादिसूत्रेषूपसर्गग्रहणस्य प्राद्युपलक्षणत्वमङ्गीकृतम्। यतो हि तत्र-सर्वत्र द्रव्यवाचिनां शब्दानां प्रयोगात् क्रियाशब्दस्याप्रयोगाच्च द्रव्यवाचिना शब्देनोपसर्गशब्दस्य सामर्थ्याभावादुपसर्गग्रहणं प्राद्युपलक्षणार्थत्वेन प्रतिपादितमस्ति। किं बहुना, गतिसंज्ञायाश्चापि निर्वाहो न दृश्यतेऽष्टाध्याय्यां सर्वत्र। गतिसंज्ञायाः स्खलितप्रयोगस्य समर्थनमपि कृतमाचार्यपतञ्जलिकैयटनागेशादिभिः [५]"चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः" इति सूत्रे। महाभाष्यकारस्तु स्वीकरोति यत् सर्वत्रैवाष्टमिकेऽध्याये गतिग्रहणमुपसर्गग्रहणार्थं द्रष्टव्यम्। 'क्त्वा-ल्यप्' प्रत्यययोर्योगेऽपि पाणिनेः स नियमः सदा न परिपाल्यते, येन नियमेन 'क्त्वा'-प्रत्ययान्तशब्दा अनुपसर्गत्वेनाभिमताः, 'ल्यप्' प्रत्ययान्तशब्दाः सोपसर्गत्वेन[६]। पारिभाषिकशब्दत्वेनाङ्गीकृतानां शब्दानां नियमानाञ्च इमे शिथिलाः प्रयोगाः सङ्केतयन्ति यत् पाणिनिकात्यायनपतञ्जल्यादिभिरपि स्वीक्रियत उपसर्गाणां यास्कीया स्वातन्त्र्येण प्रयोगपरम्परा। वस्तुतो भाषाया याऽविच्छिन्नपरम्परा तदानीमासीत्, तस्यामुपसर्गाणां याऽर्थयत्ता चासीत्, तां परम्परां सर्वथाऽपाकर्तुमवरोद्धुं वा नैते क्षमा आसन्। अनेन विश्लेषणेन कथितुं शक्यते यद् वैदिकलौकिकभाषयोः पार्थक्ये उपसर्गाणामनन्यसाधारणो योगोऽस्ति। वस्तुतो वैदिकभाषाऽपेक्षया लौकिकभाषोपसर्गाणां दृष्ट्याऽति दरिद्रा दृश्यते; न तादृशं पदसौन्दर्यम्, भाषागतोपसर्गनिपातानामर्थदृष्ट्या स्वातन्त्र्यम्, पारिभाषिकशब्दनिर्माण उपसर्गकृतयोगा दृश्यन्ते लौकिकभाषायाम्। समर्थयते च तथ्यमिदं

---

१. "वद्धिधिनस्भावावीत्वस्वाङ्गादिस्वरणत्वेषु दोषः ( वा० ६ ), उपसर्गादित्येते विषयो न प्राप्नुवन्ति" ( महाभाष्यम्–१-४-५९ ), प्रदीपोद्योतावपि द्रष्टव्यौ।

२. "द्विगुप्राप्तापन्नालं पूर्वोपसर्गाः प्रयोजनम्"—(वा० ५), उपसर्गाः क्रार्थे—'निष्कौशाम्बिः' 'निर्वाराणसी' ( महाभाष्यम्—१-२-४४ )। अत्रोपसर्गाः क्रार्थे इत्यस्य स्थाने 'प्रादयः क्रार्थे' इत्येव साधुः।

३. "समोऽयमर्थशब्देन सह समासः। 'सम' चोपसर्गः" ( महाभाष्यम्—२-१-१ )—'सं चोपसर्ग इति। तेन तस्य द्रव्यवाचिनाऽर्थशब्देन सामर्थ्यं नोपपद्यत इति' ( प्रदीपः )।

४. "इह काश्चित् प्रकृतयः सोपसर्गाः पठ्यन्ते—√'अभिमनस्', √'सुमनस्', √'दुर्मनस्', √'उन्मनस्' इति" ( महाभाष्यम्–३-१-१२ )।

५. "अपर आह—सर्वत्रैवाष्टमिके गतिग्रहण उपसर्गग्रहणं द्रष्टव्यम्।" ( महाभाष्यम्—८-१-५७ )।

६. "There is some confusion between the gerunds in—'क्त्वा' and—'ल्यप्', and the rule of Pāṇini which ristriets the formes to uncompounded and the later to compounded verbs is not always observed"—( Sanskrit Language, P. 52, by T. Burrow )

[1]वरोमहोदयः। इत्थमुपसर्गाणां सम्बन्धे महामुनिपाणिनेर्हार्दमभिमतमुपन्यस्यानन्तरमुपसर्गा वाचकाः, द्योतका वेत्यतिविवादास्पदं विषयः प्रस्तूयतेऽधस्तात्।

उपसर्गाः वाचका, द्योतका वेति विवादो नार्वाचीनः, अपि तु प्राचीनतरोऽयं विषयः। शाकटायनादारभ्य यावदुपलब्धसंस्कृतव्याकरणग्रन्थेषु महता समारम्भेण प्रपञ्चितोऽयं सिद्धान्तः। यद्यप्यधुना नोपलभ्यत आचार्यशाकटायनस्य तद्ग्रन्थरत्नम्, यस्मिन्नयं सिद्धान्तो विवेचनीयतां गत आसीत्, तथापि सौभाग्यवशात् तेषां सिद्धान्ता उपलभ्यन्ते सर्वप्रथमं निरुक्तग्रन्थे। अन्यैरप्याचार्यैः सादरमुल्लिखितं तन्मतं स्व-स्वग्रन्थेषु। निरुक्तविश्लेषणेन द्वौ पक्षौ पुरः समायातौ—एकः पक्ष आचार्यशाकटायनस्य, अपरस्तु गार्ग्यस्य। शाकटायनो द्योतकतावादी, गार्ग्यस्तु वाचकतावादी। "न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति" इति [2]शाकटायनमतम्। "उच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तन्नामाख्यातयोरर्थविकरम्" इति [3]गार्ग्यमतम्। अर्थाच्छाकटायनो ब्रवीति यन्नामाख्यातयोर्यत् कर्म=अर्थः, तत्रैवोपसंयुज्य कञ्चिदर्थविशेषं द्योतयन्त्युपसर्गाः। गार्ग्यो ब्रवीति यद् उच्चावचाः=बहुप्रकाराः, पदस्य=उपसर्गाख्यस्य, अर्थाः=अभिधेयाः प्रकर्षादयः सन्ति। आचार्ययास्कस्तूत्तरपक्षरूपेण गार्ग्यमतमेवाङ्गीकरोति। अयमेवासीत् स आधारः, यमवलम्ब्य शब्दशास्त्रक्षेत्रे द्योतकतावाचकतावादिन्यौ महत्यौ परम्परे विस्तारंगते। अत्र तावन्मुख्यानां शाब्दिकानां मतान्यालोचयिष्यन्ते।

[4]महामुनिपतञ्जलिस्तूपसर्गाणां वाचकत्वमेव स्वीकरोति। तद्व्याख्यातारौ [5]कैयट[6]नागेशौ केवलमुपसर्गाणां द्योतकत्वं मन्येते। अष्टाध्यायीव्याख्यातारः [7]जयादित्यवामनजिनेन्द्रबुद्धि-[8]हरदत्तादयोऽपि द्योतकत्वमेव भजन्ति। सिद्धान्तकौमुदीव्याख्याता [10]ज्ञानेन्द्रसरस्वती-

१. In comparison with 'Vedic–Language' later Sanskrit is noticeably poorer in words of this type."
( Sanskrit–Language., P. 283., by T. Burrow )

२. निरुक्तम्–१-१-४।

३. निरुक्तम–१-१-४।

४. "अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्" ( महाभा० २-२-१९ )।

५. "उपसर्गास्तु द्योतका इति नास्ति कश्चिदस्मिन् पक्षे दोषः" ( कैयटः )।

६. "उपसर्गस्तु द्योतक इति" ( नागेशः )।

७. "अप्शब्दं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्" ( काशिका; अष्टा० ६-३-९७ )।

८. "अप्शब्दस्य तु क्रिया न सम्भवति ···" ( न्यासः )।

९. "इह यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषामुपसर्गत्वम्" ( पदमञ्जरी )।

१०. "उपसर्गास्त्वर्थविशेषस्य द्योतकाः" ( तत्त्वबोधिनी, अष्टा० ८-४-१८ )।

महोदयः स्वीकरोत्युपसर्गाणां द्योतकत्वम्। अत्र तावद् विवेचनीयं वर्तते यदिमे आचार्या एतत्तु स्वीकुर्वन्त्येव यदुपसर्गास्तत्तद्धातुपूपसंयुज्यार्थविशेषस्य द्योतका भवन्ति, अर्थान्न केवलेन धातुना सोऽर्थोऽभिव्यज्यते, न च केवलेनोपसर्गेण, अपि तु धातूपसर्गसङ्घातेनैव तदर्थो द्योतितो भवति। [1]कौटिलीयार्थशास्त्रकारः, [2]नाट्यशास्त्रकारः, बृहद्देवताकृच्छौनकोऽप्युपसर्गाणां[3] द्योतकत्वं प्रतिपादयन्ति। एतेषामाचार्याणां सम्मतिरस्ति यदुपसर्गा अर्थविशेषं विवेचयन्ति, न तु द्योतयन्ति। विवेचनम् = विविक्तीकरणमित्यर्थः। नाट्यशास्त्रव्याख्याकृदभिनवगुप्ताचार्यः[4] प्रतिपादयति यत्—"धात्वर्थानुपसृजन्ति = उपरागेणान्यादृशान् कुर्वन्ति। ...... यद्वा स्वार्थे धात्वर्थानुपसृजन्ति।" एतेनाभिनवगुप्ताचार्यव्याख्यानेन सिध्यति यदुपसर्गाणां स्वार्थस्तु भवत्येव। अत एव ते धात्वर्थानपि स्वार्थे उपसृजन्ति = अन्यादृशान् कुर्वन्ति। निरुक्तव्याख्याता [5]दुर्गाचार्यः, [6]सायणः, वाजसनेयिप्रातिशाख्यव्याख्याकृदनन्तभट्टादयोऽप्युपसर्गाणां[7] द्योतकत्वमेव साधयन्ति। इमेऽप्याचार्या उपसर्गाणां स्वार्थप्रकटनपूर्वकद्योतकत्वं स्वीकुर्वन्ति। आचार्यदुर्गस्तूत्तरपक्षरूपेण वाचकत्वमेवाङ्गीकरोति।

[8]आचार्यजैनेन्द्रः, [9]मुग्धबोधकारः प्रक्रियाकौमुदीकाररामचन्द्रः[10], सारस्वतव्याकरणकृदनुभूतिस्वरूपाचार्यः[11], उपसर्गार्थसङ्ग्रहकृत् कृष्णाचार्यः[12], [13]वाचस्पत्यभिधानकारः,

---

१. "क्रियाविशेषकाः प्रादय उपसर्गाः" ( अर्थशास्त्रम्—२-१० )
२. "प्रातिपदिकार्थयुक्त्या धात्वर्थानुपसृजन्ति ये स्वार्थे" ( नाट्यशास्त्रम्—१४-३० )।
३. "उपसर्गास्तु विज्ञेया क्रियायोगेन विंशतिः।
विवेचयन्ति ते ह्यर्थं नामाख्यातविभक्तिषु॥" ( बृहद्देवता —२-९४ )
४. "धात्वर्थानुपसृजन्ति = उपरागेणान्यादृशान् कुर्वन्ति। यद्वा स्वार्थे धात्वर्थानुपसृजन्ति।"
( अभिनवभारती—ना० शा० १४-३० )
५. "न तूपसर्गनिपातानां नामाख्यातनिरपेक्षाणामर्थोऽस्ति" ( दुर्गः, नि० १-१ )।
६. "प्रागुपसृज्यन्ते आख्यातपदस्येत्युपसर्गाः प्रादिः" ( सायणः, ऋ० १-१६४-४५ )।
७. "तत्र क्रियैव प्रधानम्, उपसर्गस्तु क्रियाया एव विशेषं करोति ( अनन्तभट्टः, वा० प्रा० ८-५० )।
८. "प्रादिग्रहणे क्रियमाणे अक्रियायोगे निसंज्ञा न स्यात्" (जैनेन्द्रव्याकरणम्—१-२-१२९; महावृत्तिः)।
९. "अत एव गेर्द्योतकत्वम्, न वाचकत्वम्" ( रामतर्कवागीशः, मुग्धबोधव्याकरणम्—१० )।
१०. "प्रादीनां क्रियायोगाव्यभिचारात् सत्यम्" ( कृष्णाचार्यः, प्र० कौ० १-४-५९ )।
११. "धातूपसृष्टानां क्रियायोगे तां प्रत्येवोपसर्गत्वम्" ( वासुदेवभट्टः, सा० व्या० ८ )।
१२. "उपसर्गा हि अर्थविशेषस्य द्योतकाः, न तु वाचकाः" ( कृष्णाचार्यः—उपसर्गार्थसङ्ग्रहो नाम सरस्वतीभवनस्थहस्तलिखितग्रन्थः; ग्र० सं० ३८१५१ )।
१३. "किन्तु द्योतका इति नैयायिकाः, वैयाकरणास्तु उभयेऽपि" ( वाचस्पत्यम्—पृ० ११३५-३६ )।

[1]प्राकृतभाषाऽभिधानराजेन्द्रकारः, [2]व्येङ्कटनाथः, [3]माघः, [4]नारायणपण्डितः [5]चित्रभानुश्चोपसर्गाणां द्योतकतावादिनः। सर्वेऽप्येते शाब्दिकाः सडिण्डिममुद्घोषयन्त्युपसर्गाणां द्योतकत्वम्। इत्थं निरुक्ते बीजरूपेणाङ्कुरितोऽयं द्योतकतासिद्धान्तः खीष्टाब्दत्रयोदशशताब्दीपर्यन्तमुत्तरोत्तरं विकसन् भाषाशास्त्रीयदृष्ट्या पदविज्ञानस्य महान्तमुपकारमकरोत्। यद्यपि निरुक्त उल्लिखितं शाकटायनाचार्यस्य मतमुपहासदृष्ट्या तदानीं शाब्दिकैरङ्गीकृतम्—"शकटस्य च तोकम्" इति वाक्येनेदमेव ध्वन्यते यदुपाहासास्पदमासीत् स सिद्धान्तः, तथापि तत्पाश्चात्त्यैः शाब्दिकैस्तन्मतमेवावलम्ब्य द्योतकतावादस्यावैज्ञानिकः पक्ष उपस्थापितः समर्थितश्च। अस्य प्रधानकारणमासीद् वैदिकभाषाया अनालोचनम्। आचार्यपाणिनेः पश्चाद्भाविनः सर्वेऽपि टीकाकारा जैनबौद्धादिवैयाकरणाश्चापि पूर्वाग्रहपीडिताः सन्तः स्व-स्वपूर्वाचार्याणामनुकृतवन्तः। न हि तत्रासीत् काचिद् भाषशास्त्रीयात्मदृष्टिः, न वासीद् भारतीयवाङ्मयस्यैतिहासिको बोधः। एवमुपसर्गाणां द्योतकतापक्षमुपस्थाप्यधुना वाचकतापक्षोऽपि विमर्शयिष्यते। तदनन्तरमेवोभयोः सिद्धान्तयोस्तोलनात्मक आनुसन्धानिकश्च निष्कर्षः फलाय कल्पेत।

इदन्तु प्रथितमेव यद् आचार्यगार्ग्यस्तत्समर्थको यास्कश्चोपसर्गाणां वाचकत्वपक्षमेवाङ्गीकुरुतः। निरुक्तव्याख्यातारः [6]स्कन्द[7]महेश्वर[8]दुर्गाश्चापि वाचकतापक्षमेवाश्रयन्ति। यद्यपि पूर्वपक्षरूपेण दुर्गाचार्यो द्योतकतापक्षमप्याश्रयति, किन्तूत्तरपक्षत्वेन वाचकतापक्षस्यैव समर्थनं करोति। आचार्यस्कन्दः प्रतिपादयति यद् गवादीनि नामानि सर्वैर्मनुष्यैर्ज्ञायन्ते, अतस्तेषां वाक्ये प्रधानता। नामाख्यातोपसर्गाणामर्थास्तु सर्वैर्मनुष्यैर्न ज्ञायन्ते, अतो वाक्ये तेषामप्रधानता। स्कन्दस्याभिप्रायोऽयमेवास्ति यद् वाक्ये न केवलमुपसर्गनिपाताः, अपि त्वा-

---

१. "उपसर्गास्तु द्योतका इति मेनिरे" ( अभिधानराजेन्द्रः—पृ० १०२० )।
२. "उपसर्गाश्च धातुलीना इति भावः" ( व्येङ्कटनाथवृत्तिः, गीता—९-३० )।
३. "धातुलीनमुपसर्गं इवार्थम्" ( शिशु० १०-१५ )।
४. "उपसर्गाणां पुनरभिव्यञ्जकत्वम" ( नारायणवृत्तिः, कुमारसं० १-२५ )।
५. "अपिशब्दः समुच्चयद्योतकः" ( चित्रभानुवृत्तिः; किरातार्जुनीयम्—२-५ )।
६. "गवादीनि नामानि। कुतः ? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात्। आख्यातोपसर्गनिपातास्तु अप्रसिद्धार्थत्वान्नार्थं सर्वे वेदयन्ते" ( स्कन्दस्वामी, ऋ० १।१६४।४५ )।
७. "अपि च केवलादप्यर्थप्रतीतिर्दृश्यते, तत्र केवलस्यापि प्रयोगः। यदुद्गतो निवतो यासि निष्कौशाम्बिरिति। आनर्थक्ये हि सति तद्धितसमासौ न स्याताम्" ( महेश्वरः, निरु० १-१-३ )।
८. "स्त्रीपुन्नपुंसकभेदं निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति" ( दुर्गाचार्यः, निरु० १-१-१ )।

ख्यातोऽपि विशेषणत्वेनैव प्रयुज्यते। अपरं तथ्यं तस्यास्ति यदुपसर्गा अप्रधानत्वाद् विशेषणत्वेन वाक्यार्थं विशेषयन्ति, तद्वदाख्यातनिपाता अपि। महेश्वरस्तु स्पष्टतया ब्रवीति यदुपसर्गाणामर्थास्तु भवन्त्येव, वाक्ये तेषां प्रयोगा अपि स्वातन्त्र्येण भवन्ति। अन्यथा "यदुद्वतो निवतो यासि निष्कौशाम्बिः" इत्यादावनर्थकत्वात् तद्धितसमासौ न स्याताम्। [1]ऋग्वेद-मन्त्रेणापि समर्थनं भवति महेश्वरमतस्य।

अष्टाध्याय्यां पाणिनिरप्युपसर्गाणां विभिन्नार्थतां निश्चिनोति। "[2]उदोऽनूर्ध्वकर्मणि" [3]"प्रोपाभ्यां समर्थाभ्याम्"—इत्यत्रान्वयव्यतिरेकाभ्यां निष्कष्टुं शक्यते यद् 'उत्' इत्युपसर्ग उर्ध्वकर्मणि प्रसिद्ध आसीत्, तद्वत् 'प्र' इत्यनेनायाति यत् प्रोपसर्गोऽनेकार्थ आसीत्। [4]महाभाष्यकारस्तु वाचकतापक्षमेवोद्भावयन् सिद्धान्तयति यदुपसर्गाणामयं स्वभाव एवास्ति यत् "उपसर्गाश्च पुनरेवात्मकाः, यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते, तत्र क्रियाविशेषमाहुः।" अत्र स्पष्टमुद्घोषयति महामुनिपतञ्जलिर्यद् यत्र क्रियावाची शब्दः = क्रियाया वाचकः शब्दः, न तु द्योतकः, प्रयुज्यते तत्र क्रियाविशेषमाहुः = ससाधनां क्रियामाहुरिति। उपर्युक्तं वार्त्तिकं विवृण्वन् [5]स पुनः स्पष्टयति यत् "√इ-धातोः पृथक्प्रयुज्यमानस्याधेर्योऽर्थो भवति, स एवार्थः √इ-सहकृतस्याधेः।" "कः पुनरन्यत्राधेरर्थः? अधिरुपरि भावे वर्तते।" इत्थं महामुनिपतञ्जलेर्महाभाष्यविश्लेषणेनोपसर्गाणां वाचकताविषये तस्यौदार्यभावो महामुनिपाणिनेरौदार्येण सह संवादं करोति।

प्रायेण सर्वेषु प्रातिशाख्यग्रन्थेष्वप्युपसर्गाणां वाचकतापक्ष एव प्रतिष्ठापितो वर्तते। यतो हि प्रातिशाख्यग्रन्थास्तु शब्दशास्त्रदृष्ट्या, विषयदृष्ट्या च वैदिकव्याकरणस्य प्रातिनिध्यं कुर्वन्ति। वैदिकध्वनीनामुच्चारणप्रक्रियायाम्, उदात्तानुदात्तस्वरितस्वरप्रक्रियायाम्, ह्रस्वदीर्घप्लुतविचारस्चर्चायाम्, पदपदार्थवाक्यवाक्यार्थनिर्धारणप्रक्रियायाम्, नामाख्यातोपसर्गाणामुदात्तानुदात्तस्वरितभेदेन पदपदार्थास्कन्दनगवेषणायाश्च; यथा प्रातिशाख्यग्रन्था वैदिकभाषायाः

---

१. "स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत्"– (ऋ० ३-२-१०), 'उद्वतः = उच्छ्रायवतः, निवतः = नीचैर्भाववतश्च ···" (सायणः)।

२. अष्टाध्यायी—१-३-२४।

३. ,, ,, —१-३-४२।

४. महाभाष्यम्—१-३-१; वा० ७।

५. "ते मन्यामहे य एवास्याधेरन्यत्रार्थः, स इहापीति। कः पुनरन्यत्राधेरर्थः? अधिरुपरि भावे वर्तते"– (म० भा० १-३-१; वा० ७)।

४

संरक्षणम्, भाषाशास्त्रीयदृष्ट्या विवेचनञ्च कुर्वन्ति, न तथा वैज्ञानिकी परिपाटी दृश्यते लौकिक-संस्कृतव्याकरणग्रन्थेषु। [1]वाजसनेय[2]तैत्तिरीयप्रातिशाख्ययोरुपसर्गाणां वाचकता स्वीक्रियते। [3]ऋग्वेदप्रातिशाख्ये तु प्रतिपदोक्ततयोपसर्गाणां वाचकतैव प्रतिष्ठापिता दृश्यते। ऋग्वेदप्रातिशाख्यमाख्याति यद् विंशतिरूपसर्गा अर्थवाचकाः सन्ति। [4]अथर्वप्रातिशाख्ये तूपसर्गाणां सामर्थ्यम् = स्वतन्त्रार्थः, स्वतन्त्रप्रयोगश्च प्रतिपादितो वर्तते। यतो हि उपसर्गाख्यातयोः समासे उभयपदस्य सामर्थ्यमभिप्रेतं भवति, अन्यथा समास एव न स्यात्। समस्यमानैः पदैः स्वतन्त्रार्थैर्भवितव्यमेव। इत्थं प्रातिशाख्यग्रन्थानां पर्यालोचनेन वाचकतापक्षस्य दृढोऽपि सिद्धान्तो दृढतरो भवति।

प्रसङ्गप्राप्तेऽस्मिन् विषये पाणिन्यार्वाचीनानां शाब्दिकानां सिद्धान्ताः पर्यालोचनमपेक्षन्ते। महावैयाकरण[5]भोजदेव[6]क्षीरस्वामि[7]हर्षकीर्तिदण्ड[8]नाथाशु[9]बोधकार[10]महादेवभट्टादयस्तथा वेदव्याख्यातारौ[11]सायणो[12]व्वटावप्युपसर्गाणां वाचकतामतिप्रौढशैल्या प्रतिपाद-

---

१. "उपसर्ग उपसर्गे"– ( वा० प्रा० ६-२ ), "उपसर्गोऽनुदात्तो भवति उपसर्गे प्रत्यये", उव्वटाचार्यः।

२. तैत्तिरीयप्रातिशाख्यम्—१०-९।

३. "उपसर्गा विंशतिरर्थवाचकाः सहेतराभ्याम्"– ( ऋ० प्रा० १२-२० )।

४. "उपसर्गपूर्वमाख्यातं यत्रोभाभ्यां समर्थ्यते। सामर्थ्यमुभयोस्तत्र ···"–( अ० प्रा० १-१-१३ )।

५. "तत्र नामाव्ययानुकरणकृत्तद्धितप्रातिपदिकानि"– ( शृङ्गारप्रकाशः—१, पृ० ८; श्रीरङ्गप्रकाशनम्, १९३९ ई० )।

६. (क) "वस्तुतस्तु सर्व एव द्विधा धातवः–सोपसर्गाः, निरुपसर्गाश्च"– ( क्षीरतरङ्गिणी-चुरादिगणः, ३२९ )।

(ख) "स्वार्थबलाद्धात्वर्थं बाधतेऽनुवर्तते विशिनष्टि वा"– (निपाताव्ययोपसर्गवृत्तौ, उपसर्गकाण्डम्—१)।

७. सर्वेऽपि धातवः प्रायः प्राद्युपसर्गपूर्विकाः।
अर्थान्तरं भजन्त्येव प्रभवत्यादयो यथा॥
( सारस्वतीयो धातुपाठः, 'The Descriptive Catalogue of Sanskrit MSS. No. 678; P. 260, Adyar Library )।

८. "यत्क्रियायुक्तास्तं प्रति पूर्वपदप्रकृतिस्वरेण निपातस्वरः सिद्धो भवति"– ( हृदयहारिणीव्याख्या–सरस्वतीकण्ठा० १२८ )।

९. "निपातोपसर्गयोर्नामत्वमपीच्छन्ति केचित्। तेन ततः सुबादयः स्युः, तेषां च लुम् इति भेदः"– ( आशुबोधव्याकरणम्, संज्ञाप्रकरणम्—३२ )।

१०. एकेन युग्मेन कृशानुभिर्वा स्वार्थं परित्यज्य परार्थभाजः।
शब्दा इति स्युर्विंशदार्थबोधा विधीयतेऽसावुपसर्गवर्गः॥
( उपसर्गवर्गः—२ )

११. "प्रशब्दाद् गम्यमानार्थे अभिधेये वतिप्रत्ययः"—( सायणः; अथर्ववेदः–१-१३-२ )।

१२. "अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः। विशेषार्थस्त्वनन्ता एव"—( शुक्लय० उव्वटभाष्यप्रस्तावना )।

यन्ति । शृङ्गारप्रकाशकृद्भोजदेवः स्वीकरोति यदुपसर्गाः षोढा भवन्ति । ते खलु वाचकाः, द्योतकाः, विशेषकाः, सहाभिधायकाः, कार्यार्थकाः, निरर्थकाश्चेति षोढा विप्रथन्ते । भोजदेव-क्षीरस्वाम्याशुबोधकाराश्चोपसर्गाणां नामत्वम् = प्रातिपदिकत्वमपीच्छन्ति । तेषां सिद्धान्तोऽस्ति यद् यथा नामादयो धातवश्च प्रकृतिरूपेण प्रत्ययानपेक्षन्ते, तद्वदुपसर्गादयोऽपि प्रत्ययमपेक्ष-माणाः सन्तः प्रकृतित्वं भजन्ते । आशुबोधकृता तु चतुर्विधेषु पदेषूपसर्गाणां गणना प्रकृतित्वेन क्रियते । स विवृणोति यत् [1]"नामधातूपसर्गनिपाताः प्रकृतिः ।" तत्र नामप्रकृतिकाः सुप्-तद्धितादयः, धातुप्रकृतिकास्तिङ्कृदादयः, उभयप्रकृतिकाः क्यजादयः, तद्धिताः पुनर्निपा-तोपसर्गप्रकृतिका अपि । तेन 'नतराम्', 'सुतराम्' इत्यादयः प्रयोगा भवन्ति । एतेषां शाब्दिकानामुपसर्गाणां विषये सिद्धान्तानां पर्यालोचनेन साधिकारं कथितुं शक्यते यद् भाषाशास्त्रीयदृशा, भाषाप्रवाहदृशा चैतेऽत्युदारमनसस्सन्ति । पदानां तेषामर्थानाञ्च स्वातन्त्र्य-विषये यो विचारप्रवाहो वैदिकसाहित्ये प्रवाहित आसीत्, तस्य प्रातिनिध्यं येन केन प्रकारेणैते शाब्दिकाः स्वस्वग्रन्थेषु कुर्वन्ति ।

प्राचीनभारतीयसाहित्ये पालिप्राकृतभाषयोर्मूर्द्धन्यं स्थानमस्ति; विशेषतो भाषा-शास्त्रदृष्ट्या । कालान्तरं प्राप्तासु सर्वासु व्यवह्रियमाणभाषासु कया रीत्या परिवर्तनं भवति, केन प्रकारेण भाषाया अभिव्यञ्जना शनैः शनैरन्यथास्वरूपं गृह्णाति ? अस्य सर्वोत्तमं निदर्शनं स्त उभे भाषे । उपसर्गाणां सम्बन्धेऽपि पालिप्राकृतभाषयोः शाब्दिकानामयमेवाभिप्रायोऽस्ति यत् ते वाचका एव भवितुमर्हन्ति, न तु द्योतकाः । प्राकृतभाषाऽनुशासनकृत् [2]त्रिविक्रमोऽ-[3]प्पयदीक्षितश्चोपसर्गवाचकतापक्षपातिनौ । इमावपि मन्येते यदुपसर्गा नियतार्थवृत्तयः = निश्चितार्थकाः सन्ति, अपि च धातूनामर्थानप्येते स्वकीयेन नियतार्थसामर्थ्येन स्वार्थानु-कूल्येन परावर्तयन्ति । [4]अप्पयदीक्षितस्तूपसर्गाणां तथैव प्रकृतित्वं प्रतिपादयति यथा पूर्वं चर्चा कृता । पालिशब्दानुशासनकृता [5]मोग्गलनाथथेरेणाप्युपसर्गाणां स्वतन्त्रार्थकत्वमतो वाचकत्वं

---

१. आशुबोधव्याकरणम्—सं० प्रकरणम्—३३ ।

२. "प्यादयः"—( प्रा० शब्दानुशासनम्—२-१-७७ ); 'प्यादयो = प्रादयो नियतार्थवृत्तयः प्राकृते प्रयोज्याः'—( स्वोपज्ञवृत्तिः )

३. "प्यादयः"– ( प्राकृतमणिदीपः—२-१-७६ ); 'प्रकृतसूत्रस्थादिशब्देन 'वि' इत्यादीनामप्यर्थकानां ग्रहण-मिति भावः'—( श्रीनिवासविरचिता दीधितिव्याख्या ) ।

४. "अपेः पदात्"—( प्रा० सू० १-२-५ ) ।

५. "परा सद्दो परिहानि पराजयगतीसु च ।
भुसत्थेपटिलोमत्थे विक्कमाडमसनादिसु ॥"
( मोग्गलनाथथेरविरचिताऽभिधानप्पदीपिका )

स्वीक्रियते। अत एव प्राचीनप्राकृतमयेष्वशोकाभिलेखेषूपसर्गाणां विकासः स्वतन्त्रतयोपलभ्यते। [१]गिरनारकालप्योरभिलेखयोः 'दुस्' इत्युपसर्गः√कृधातुना संयुज्यमानः सन् एकं स्वतन्त्रार्थकं शब्दं निर्माति। यथा 'दुस्+√कृदुष्करम् > दुकरम्–रलयोरभेदः– > दुकलम्=श्रेयस्करमित्यर्थः।' एवमेव पञ्चमशताब्द्यां [२]निर्मितमृच्छकटिकनाटके प्रयुज्यमानायाः प्राकृतभाषाया अपि विमर्शनेनैवंविधाः केवलमुपसर्गरूपाः शब्दा दृश्यन्ते, ये सर्वथा स्वतन्त्रार्थकत्वेन प्रयुज्यन्ते। 'अन्तर' इत्युपसर्गः चित्तार्थेऽन्योन्यार्थे च प्रयुज्यमानः सन् किञ्चिद् ध्वनिपरिवर्तनेन सर्वतोभावेन नूतनतां भजति। यथा–'अन्तरम् > अन्तलम् > अतलम्=चित्तम्, अन्योन्यं वार्थः।' मृच्छकटिकव्याख्याकृल्लल्लदीक्षितस्यायमेवाभिप्रायः। वस्तुतः प्राकृतपाल्यपभ्रंशभाषासु एका विकसिता शैली दृश्यते यदुपसर्गनिपाताव्ययानां किञ्चिद् ध्वनिभेदेन सर्वथा नवीनशब्दनिर्माणभावना।

अत्राधुना तावदुपसर्गाणां वाचकताविषये पाश्चात्त्यपौरस्त्याधुनिकसंस्कृतभाषागवेषकाः किं कथयन्तीत्यपि विमर्शनीयं वर्तते। यतो हि संस्कृतभाषायाः अनुसन्धान एतेषामध्यवसायः, विशेषतो विभिन्नार्यभाषाणां सामीप्यसंपादने, तासामैक्यापादने चातिश्रेयस्करः सञ्जातः। [३]मैक्समूलर[४]-मेकडानल[५]-ह्विट्नी-[६]बरो- [७]गोल्डस्टूकर- [८]स्पेजर- [९]हिगशीमोतो-वान्द्रियैज-[१०]

---

१. अशोक के अभिलेख–गिरनार–५-१; कालपी–५-१३; सम्पादकः–डॉ० राजवलीपाण्डेयः।

२. "शकारः–पेक्खदाव अन्तलेण ···।" ( मृच्छकटिकम्–१,पृ० ३७; निर्णयसागरप्रकाशनम्–१८९६ ई०,; 'अन्तलेण = चित्तेन, अन्योन्यं वा'—( लल्लदीक्षितः )।

३. A Sanskrit-Grammar; P. 153; by F. Maxmuller.

४. A Vedic-Grammar for students; P. 208; by A. A. Macdonell.

५. "With their fundamental meanings", Sanskrit-Grammar, P. 396; by—W. D. Whitney.

६. 'These prepositional formations have a comparative meaning". [ Sanskrit-Language; P. 149; by T. Burrow ].

७. "उपसर्गाः' as defined by Pāṇini, and their meanings as enumerated by him." [ Pāṇini, P. 225; by To Goldstucker ].

८. "The Vedik Mantras contain accordingly a still greater number of prepositions and are displaying a still greater variety ... " ) Sanskrit-Syntax; P. 114; by Br. J. S. Speijer )

९ "Sometimes the prefix—a=(अ)—expresses the same meaning" ( An Elementary Grammar of the Pali Language, P. 233; by P. K, Higashimoto; pub. 1965 )

१०. " ··· उपसर्ग के प्रयोग से वाक्य का अर्थ अधिक दृढ़ हो जाता है, यह वृत्ति जो फ्रांसीसी में सदा से सजीव रही है, लैटिन में भी और लैटिन से पहले भी रही होगी।"—( भाषा, पृ० १३५; मूल लें० जो० वान्द्रियैज; अनु० जगवंशकिशोरबलवीर, प्र० १९६६ ई०।"

[१]ब्लाख-[२]मेस्चानिनोव-[३]जैक्सन-[४]मोनियरविलियम-[५]विल्सन-[६]थामसक्लार्क-[७]गुणे-[८]आप्टे-प्रभृतयो भाषाविद उपसर्गाणां वाचकतां स्वीकुर्वन्ति ह्विट्नी-स्पेजर-मैकडानल-वान्द्रियैज-प्रभृतयस्तूपसर्गाणां नैसर्गिकीं वाचकतामर्थवत्ताञ्चोद्घोषयन्ति। एतेषां सिद्धान्त एवास्ति यच्छब्दानामर्थादर्थान्तरं भवतु नाम, अर्थाच्छब्दानामर्थाः परिवर्तन्तां नाम, किन्त्वर्थविहीनः शब्दो न भवति। ऐतिहासिकप्रवाहे दैशिकप्रसारे च शब्दानामर्था अवश्यमर्थान्तरतां भजन्ते, यतो हि भाषासु समाजधर्मितायाः, कालधर्मिताया देशधर्मितायाश्च प्रभावस्तु स्वाभाविक एव। भाषा हि नाम मानवस्यातिसुकुमारं किमपि वस्तु। न हि सा निर्धारितेन नियमबद्धेन च मार्गेण सर्वदा गन्तुं शक्नोति, अथ च बीजगणितीयचिह्नानामिव रिक्तार्थत्वेनापि व्यवहर्तुं न शक्यते। यदा कश्चिच्छब्दः कालक्रमेण रिक्तार्थतां व्रजति, तत्पूर्वमेव तस्यापरोऽर्थः शब्दानुबिद्धत्वेनेव प्रसिद्धिं [९]प्राप्नोति। अस्य विश्लेषणस्यायमेवाभिप्रायो यद् वाचकतायाः सम्बन्धः सार्थकेन शब्देनास्ति, द्योतकतायास्तु रिक्तार्थकेन उत वा पादपूरकेण अथवा निरर्थकेन भवति। पदद्योतकतावादस्य निरर्थकतावादस्य च खण्डनं करोति महामुनिः [१०]पतञ्जलिः "तत्र वर्णेनैकेनाप्यनर्थकेन भवितुं नार्हति, किं पुनरियता

---

१ "अथर्ववेद 'प्रादुः' तु० ऋग्वेद 'प्रातर' और संस्कृत 'उत्तराहि' उत्तर में के पर प्रत्यय की अपेक्षा कम परिवर्तित होता है"—( भारतीय आर्यभाषा, पृ० १४, मूल लेखक—ज्यूल ब्लॉख, अनु० लक्ष्मीसागरवार्ष्णेयः, प्र० १९६३ )।

२. "Each word has its own meaning and there is no word without meaning." ( ध्वनिसिद्धान्तः—भोलाशङ्करव्यासलिखितादुद्धृतम्, पृ० २१ )।

३. "Some of these prefixes were originally stereotyped cases of nouns, that have assumed an adverbial character."
( An Avesta Grammar, P. 209; by A. V W jackson, 1892 )

४. "In the 'Veda' they are separable from the Verb."
( A Sanskrit-Eng. Dictionary; P, 219, by S. M. M. William)

५. An Inrroduction to the Grammar of the Sanskrit-Language; P 101-2

६. "The prepositions ... ... they have in particular instances acquired some variety of meaning and application"
( The comparative-Grammar; P. 331; bp REV. Thomas Clark; 1862 )

७. "पूर्वसर्ग ( preposition ) मूलतः संज्ञाओं और सर्वनामों की भाँति ही लोचवान और अर्थपूर्ण शब्द थे।"—( तुलनात्मक भाषा विज्ञान, पृ० ५६; मूल ले० डा० पी० डी० गुणे; अनु० डा० भोलानाथ तिवारी, १९६३ ई० )।

८. "According to the other theary prepositions express their own independent meanings. ... the latter theory appears to be more correct"
( Sanskrit-English-Dectionary; p. 465; by V. S. Apte. )

९. "भाषा" पृ० २५७; जो० वान्द्रियैज; अनु० जगवंशकिशोरबलवीर, १९६६ ई०।

१०. महाभाष्यम्—१-१-१।

सूत्रेण ।" निरुक्तव्याख्याताऽऽचार्यदुर्गोऽपि[1] प्रतिपादयति यत् "वर्णानर्थक्ये पदानर्थक्यम्, पदानर्थक्ये वाक्यानर्थक्यम्, वाक्यानर्थक्ये सति शास्त्रानर्थक्यम्" अत एव पदानर्थक्यवादो भाषाशास्त्रीयदृष्ट्याऽपि मिथ्या ।

अत्र पुनर्वैदिकसाहित्यान्तस्साक्ष्यैरपि भाषाशास्त्रीयदृष्ट्या द्योतकतावाचकतावादयोः सन्दर्भपुरस्सरं विमर्शनं नितरामावश्यकं प्रतिभाति । भाषाया निरुक्तिप्रसङ्गे यानि लक्षणानि निरुक्तग्रन्थ उपलभ्यन्ते, तैर्लक्षणैरप्युपसर्गाणां वाचकता पक्ष एव प्रस्तूयते । यद्यप्ययं प्रसङ्गः पूर्वनिबन्धेऽपि चर्चितः, तथापि पुनश्चर्चात्र श्रेयस्करी भविष्यति । तानि निरुक्तलक्षणानि तु वर्णागमः, वर्णविपर्ययः, वर्णविकारः, वर्णनाशः, धातूनामर्थातिशयश्चेति [2]पञ्चविधानि सन्ति । निरुक्तलक्षणस्यास्य व्यापकता सम्पूर्णवैदिकसाहित्य उपलभ्यते । ऋग्वेदे–'दूळ्यः'[3] 'उपरि'[4]इत्येतयोः शब्दयोर्वर्णनाशस्य=वर्णलोपस्य दृष्टान्तं तावद् विमर्शपदवीमारोहति । 'दुरः' रेफस्य लोपेनाथ च 'उ'कारस्य दीर्घत्वेन, 'उपरि' इत्युपसर्गस्य 'उ'कारस्य लोपेन सिध्यति, यत् पदधर्मिकाणीमानि कार्याणि सन्ति । पदैस्तु सार्थकैर्भवितव्यमेव । इत्थं 'दुर+धियः=दुर्धियः > दूळ्यः=पापबुद्धीनित्यर्थः । एवमेव 'उपरि > परि', तव परि=तवोपरीत्यर्थः । समर्थयते चेमानि पदधर्मिककार्याणि [5]स्कन्दस्वामी । [6]तैत्तिरीय-संहितारण्यकयोस्तु भाषायाः प्रयोगदृष्ट्याऽतिमहत्त्वपूर्णाः सन्दर्भा उपलभ्यन्ते, ये द्योतक-ताया मिथ्याप्रवादस्यातिमिथ्यात्वं प्रख्यापयन्ति—तत्र 'श्वात्रः', 'अकवारिम्', 'सूनरी', 'अहिः', 'बेकुरयः', 'अपुवायते, 'पलायिताय', 'स्न'[7] इत्येतैः प्रयोगैः । अथ च [8]सामविधानब्राह्मणीयेन 'अवलेखनम्' इति प्रयोगविमर्शनेनाप्युपसर्गनिपातानाञ्च

---

१. निरुक्तम्—१-१-४–दुर्गाचार्यः ।

२. वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥–(निरुक्तलघुविवृत्यामुद्धृतम्, पृ० ४, निर्णयसागरप्रकाशनम् १९१८ ई० ) ।

३. ऋ० सं० १-९४-८ ।

४. ऋ० सं० १०-१८-१३ ।

५. ( क ) 'दूळ्यः < दुर्धियः=पापबुद्धीनित्यर्थः' । ( स्कन्दः, ऋ० सं० १-९४-८ ) ।
( ख ) " 'उपरि' शब्दस्य च उकारलोपः ।' ( स्कन्दः, ऋ० सं० १०-१८-१३ )

६. तैत्तिरीयसंहिता—१-३-३; १-४-१७; १-६-३; ३-१-११; ३-४-७; ६-२-२; ७-१-१९-प्रयोग-क्रमानुसारेण मन्त्रसङ्ख्याऽवलोकनीया ।

७. तैत्तिरीयारण्यकम्—१-११-५३ ।

८. "अवलेखनम्=भूखननादि कर्म । अवलेखनशब्दस्य प्रथमाक्षरस्य–"वष्टिभागुरिरल्लोपम्…" इति वचनाल्लोपे 'वलेखनम्'इति रूपम् । ततश्च नञा समासे 'अवलेखनम्'इति भवतीति । अवलेखनम्=भूम्यवलेखनं न कर्तव्यम् । ( सामविधानब्राह्मणम् ३-१-२ सायणः )

नैसर्गिकी वात्रकता सिध्यति। प्रत्येकं प्रयोगमाधारीकृत्यात्र किञ्चित् स्पष्टीकरणीयं सामयिकं प्रतिभाति। [१]'श्वात्रः' इति निपातस्तु पूर्वापरवर्णविपर्ययेणान्यथा दृश्येते। 'आशु' त्राता इति श्वात्रः 'आशु + √त्रै = आशुत्रः > श्वात्रः = आशुत्रातेत्यर्थः।' 'अकवारिम्' इत्यत्र तु 'कुत्सिता अरयो यस्य स कवारिः, न कवारिम् अकवारिम्' = अकुत्सितारिमित्यर्थः। अत्र कोरुपसर्गस्य गुणः, अर्थाद् वर्णविपर्ययश्छान्दसः। [३]'सूनरी' प्रयोगेऽप्युपसर्गस्य दीर्घत्वादुपसर्गविकारश्छान्दसः। 'हे सरस्वती त्वं सूनर्यसि = मनुष्याणां सुखहेतुत्वात् शोभनमनुष्या असीत्यर्थः।' इत्थम् 'सु + नरी = सुनरी > सूनरी > सुन्दरी = शोभनमनुष्येत्यर्थः।' अत्रापि दकारागमनेन, अथ च 'उ'कारदीर्घत्वेन 'सुन्दरी' इति प्रयोगः सिध्यति। [४]'अहि'प्रयोगोऽप्युपसर्गविकारस्य सुष्ठु निदर्शनं प्रस्तौति। 'आ + √हन्, = 'आहिः' > अहिः = आगत्य हन्ता मेघानाम्। उपसर्गस्य छान्दसं ह्रस्वत्वम्, अर्थादुपसर्गविकारो दृश्यते। [५]'वेकुरयः' प्रयोगस्तु भाषाशास्त्रीयसिद्धान्तेनातिमहत्त्वमादधाति। 'वि' उपसर्गस्य केवलस्वरव्यञ्जनयोर्व्यावृत्त्या एकः विलक्षणार्थकः संज्ञाशब्दः कथं प्रयोगपदवीमारोहतीत्यस्य मौलिकमुदाहरणं 'वेकुरयः' शब्दोऽस्ति। यथा —'वि + √कृ = विकरयः > वेकुरयः = वृष्ट्यादिकरणशीलाः।' अस्मिन् प्रयोगेऽप्युपसर्गविकारश्छान्दसः। [६]'अपुवायते' अयमपि शब्दः केवलोपसर्गबलेनार्थदृष्ट्या महत्त्वमादधाति। यथा—'अप + √वै = अपवायः > अपुवायः, अपुवायते = पूतीभवतीत्यर्थः।' अत्र 'अपु'इत्युपसर्गसधर्मा वा कश्चिच्छब्दः आहोस्विद् 'अप' शब्दस्य छान्दसो वर्णविकारः। वस्तुतस्त्वन्येषां प्रयोगाणामिवात्रापि 'उ'कारागम एव। [७]'पलायिताय' इति प्रयोगेऽपि 'परा'इत्युपसर्गस्यैवार्थः प्राधान्यं भजति। यद्यपि संस्कृतसाहित्ये 'रल'योरभेदस्य सिद्धान्तः सर्वैः

---

१. "श्वात्रोऽसि = आशु त्राताऽसि। आशुशब्दस्य पूर्वापरवर्णविपर्ययः"–( भट्टभास्करभाष्यम्–तै० सं० १-३-३ )।

२. "अकवारिम् = अकुत्सितारिम्। कुशब्दस्योकारोपसर्जनो गुणश्छान्दसः, ततो नञ्समासः"–( भट्टभास्करः, तै० सं० १-४-१७ )।

३. "सूनरी = शोभनमनुष्या। उपसर्गविकारश्छान्दसः"–( भट्टभास्करः; तै० सं० १-६-३ )।

४. "अहिः = आगत्य हन्ता मेघानाम्। आङ्पूर्वाद्धन्तेः 'डि' प्रत्ययः। उपसर्गस्य ह्रस्वत्वम्"–( भट्टभास्करः; तै० सं० ३-१-११ )

५. "वेकुरयः = वृष्ट्यादिकरणशीलाः। वेरुपसर्गस्य स्वरव्यञ्जनयोर्व्यावृत्तिः"–( भट्टभास्करः, तै० सं० ३-४-७ )।

६. "सोमस्यापुवायते = पूतीभवती। अपशब्दस्य छान्दसो वर्णविकारः, उकारान्तो वा उपसर्गसधर्मा शब्दः"–( भट्टभास्करः, तै० सं० ६-२-२ )।

७. "पलायिताय = हविर्भूत्वा शीघ्रं देवसकाशं प्राप्ताय"–( भट्टभास्करः, तै० सं० ७-१-१९ )।

शाब्दिकैर्भाषाशास्त्रीयप्रभावेण स्वीक्रियत एव, तथापि 'परा' इत्युपसर्गघटकरेफस्य लत्वं सङ्केतयत्युपसर्गाणां स्वातन्त्र्यम्। एवम् "परा + √अय् = परायिताय > पलायिताय = हविर्भूत्वा देवसकाशं प्राप्ताय" इत्यर्थः। एवमेव 'निलयते', 'दुलयते' इत्यादिप्रयोगा अपि पदधर्मिककार्यमनुभवन्त उपसर्गाणामैतिहासिकस्वातन्त्र्यं स्थापयन्ति। 'स्म' इति निपातस्यापि वर्णविकारेण [1]"स्न' इति संपद्यते। निपातोपसर्गाव्ययेषु वर्णागमवर्णविपर्ययवर्णविकारवर्णनाशार्थातिशययोगैः सिद्धान्तितुं शक्यते यदेतेऽप्यर्थवाचका आसन्।

इमानि वर्णागमवर्णविपर्ययादिकार्याणि लौकिकसंस्कृतभाषायामपि तथैव प्रयुज्यमानानि दृश्यन्ते, यथा वैदिकभाषायाम्। यद्यपि भागुरिराचार्यः 'अव', 'अप' इत्येतयोरुपसर्गयोः 'अ'कारलोपं वक्ति, किन्तूपलक्षणवाक्यमेतत्। न हि केवलयोरवाप्योरुपसर्गयोरेवाकारलोपो भवति, अपि त्वन्येषामुपसर्गनिपातानामपि। वस्तुतो भागुरिराचार्यस्यायं सिद्धान्तो भाषाशास्त्रस्यैतिहासिकसन्दर्भे वैदिकं प्राग्वैदिकञ्च साहित्यं व्याप्नोति। गीताभागवतमेघदूतादिग्रन्थेषु निपातोपसर्गादिलोपस्योदाहरणान्युपलभ्यन्ते। गीतायाम्—[2]"हृदि सर्वस्य धिष्ठितम्" इति प्रयोग उपलभ्यते। तथैव भागवतेऽपि [3]"अदितेर्धिष्ठितं गर्भम्", [4]"नेत्राभ्यां धिष्ठितं हृदि" इत्यनयोः श्लोकयोरर्धेः अकारलोपो दृश्यते—'अधि + √स्था = अधिष्ठितम् > धिष्ठितम् = स्थितमित्यर्थः।' मेघदूतेऽपि 'इव' निपातस्य 'इ'कारलोपो दृश्यते [5]"पद्मिनीं वान्यरूपाम्" इत्यत्र। इदं पद्यम् इवस्य इकारलोपोदाहरणं प्रस्तौति। यथा 'इव + अन्यरूपाम् = इवान्यरूपाम् > वान्यरूपाम् = अन्यसदृशीमित्यर्थः।' [6]वाकरनागलमैकडानलप्रभृतयः संस्कृतभाषागवेषका अपि इवस्येकारलोपं समर्थयन्ते। निरुक्तकारस्त्वादिस्वरलोपस्याद्यो व्याख्याताऽऽसीदेव "[8]अथापि आदिलोपो भवति।" प्राकृतभाषायां त्वादिस्वरलोपस्य परम्परैवास्ति। यथा "इदानीम् > दाणीं', 'उदकम् > दकम्', 'अलाबू > लाबू' 'अरण्यम् > रण्णं, 'एव > वो' इत्यादयः प्रयोगा आदिस्वरलोपस्य भाषाशास्त्रीयमहत्त्वं प्रमाणयन्ति।

---

१. " 'स्न' इति पादपूरणे। छान्दसो मकारस्य नकारः"–(भट्टभास्करः, तै० आ० १-११-५३ )
२. श्रीमद्भगवद्गीता—१३।१७।
३. श्रीमद्भागवतम्—८।१७।२४।
४. „ „ —१२।९।३२।
५. मेघदूतम्—२.८०।
६. Altindische Grammatik; p. 77।
७. Vedic Grammar; p. 11।
८. निरुक्तम्—२।२।

अत्र तावद् विमर्शपदवीमारोहतीयं समस्या यद् वर्णागमवर्णविपर्ययवर्णविकारादिभिः कथं साधयितुं शक्यते यदुपसर्गाः स्वतन्त्रप्रयोगार्हाः स्वतन्त्रार्थकाश्चासन्, सन्ति च ! कैश्चिदुदाहरणैः समाधानं भविष्यत्यस्याः समस्यायाः। बहव एतादृशाः शब्दाः संस्कृतभाषायां व्यवह्रियमाणाः सन्तो दृष्टिपथमायान्ति, येष्विमानि निरुक्तप्रतिपादितानि पदधर्मिकाणि कार्याणि सञ्जातानि, किन्तु तेषामर्थबोधे न काचिद् विप्रतिपत्तिर्भवति। 'सुन्दरः', 'घनः', 'बिन्दुः', 'विंशतिः', 'रज्जुः', 'सिकता' शब्दाश्च वर्णागमवर्णविपर्ययादिकार्याणि पदधर्मित्वेनानुभवन्तः सन्तः स्वकीयामात्मशक्तिम् = अर्थबोधशक्तिं व्यञ्जयन्ति। 'सुन्दर' शब्दस्तावद् 'द'कारागमोऽनुभवति। यथा—'सु + नरः = सुनरः > सूनरः > सुन्दरः' इति। 'घन' शब्दो वर्णविपर्ययस्योदाहरणं प्रस्तौति √हन् ⌊ = हिंसागत्योः, पचाद्यचि ⌋ = हनः > 'घनः' इति। 'रज्जुः' √सृज् ⌊ = विसर्गे ⌋, 'सृजेरसुग्' चेति ( उ० १।१६ ) इति उः। धातोरसुगागम आदिसकारलोपः, यण्, 'स' स्य 'ज' त्वम् = रजुरिति। एवम् √भिद् ⌊ = विदारणे ⌋, 'मनिभ्यश्चेति' ( उ० १।'११ ) इति उः, भस्य 'बो' व्यत्ययेनेति 'बिन्दुः'। √कस ⌊ = विकसने ⌋, इतजाद्यन्तविपर्ययश्चौणादिकः = 'सिकता' इति। 'विंशति'स्तु वर्णनाशस्य = वर्णलोपस्योदाहरणम्। प्राग्वैदिकभाषायामयं शब्दः 'द्विंशति' रूपेणासीत्। भाषाया ऐतिहासिकविकासक्रमे 'द'कारलोपे सञ्जाते 'द्विंशतिः > विंशतिः' इति रूपं गृहीतम्। अत्रायं प्रश्नः समुदेति यदुपर्युदाहृताः शब्दाः किं स्वात्मशक्तिम् = अर्थावबोधशक्तिं न वहन्ति ? उत्तरं तु स्पष्टमेव। यदिमे शब्दास्तान्येव कार्याण्यनुभवन्तः स्वार्थं वहन्ति, तर्हि तेनैव नियमेन तान्येव कार्याण्यनुभवन्त उपसर्गनिपाता अपि कथं न स्वार्थं वहन्ति ? वहन्त्येव। समर्थयेते च यास्कपतञ्जल्यवमुं सिद्धान्तम्। [1]"अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति।" [2]"लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यतीति, रक्षार्थं वेदानामध्येयं व्याकरणम्" इति। आभ्यां यास्कपतञ्जलिसिद्धान्ताभ्यामिदमेव निष्कृष्यते यद् भाषाया ऐतिहासिकपरिवर्तने देशकालप्रभावाच्छब्देषु विकृतिर्भवत्येव, किन्तु न तेनार्थक्षतिर्भवति। एतत्तु भवितुं शक्यत एव यद् विकारमापन्नेन केनचिच्छब्देनान्यार्थसम्पादनं नाम, किन्त्वर्थविहीनः शब्दस्तु न भवति।

अत्रेदमपि विचारणीयमस्ति यद् यासां भाषाणां कालिकदृष्ट्याऽति विस्तीर्ण इतिहासो भवति, तासु तासु भाषासु निश्चितरूपेण शब्दानां केचिदर्था विस्मर्यन्ते, केचिद् नवीनार्था

---

१. निरुक्तलघुविवृतिः–२।७।८, पृ० १०५, निर्णयसागरप्रकाशनम्, १९१८ ई०।

२ महाभाष्यम्—१।१।१, पृ० १०, मद्रपुरीयसर्वकारप्रकाशनम्, १९४८ ई०।

आरोप्यन्ते, केचिदुभयार्थकाः शब्दा एकमर्थमेव वहन्ति, केचिदेकार्थकाः शब्दा उभयार्थताम्, अथ चानेकार्थतां व्रजन्ति। भाषाया लम्बायमान इतिहासे कालस्य, देशस्य, तत्तज्जातीनाम्, तत्तद्भाषाणां प्रभावस्त्वनिवार्यत्वेन स्वीक्रियत एवाधुनिकभाषाशास्त्रमर्मज्ञैः। संस्कृत-भाषाया इतिहासस्त्वविच्छिन्नरूपेणातिविशालतामातनोति। अतोऽस्यां भाषायां तासां तासां परिस्थितीनां प्रभावस्तु सञ्जात एव। प्रसङ्गोऽयमुदाहरणैः स्फुटतां यास्यति। [1]ऋग्वेदे 'असुर'शब्दः 'अरि'शब्दश्चानेकार्थकावास्ताम्। 'असुर'शब्दस्य तत्र चत्वारोऽर्था उपलभ्यन्ते—'असुरः = राक्षसः, शत्रुः, प्रज्ञावान्, बलवान्'इति। अवेस्ताभाषायामपि किञ्चिद् ध्वनिभेदेनायमसुरशब्दोऽनेकार्थको दृश्यते। यथा—'असुरः > अहुरः = स्वामी, बलिष्ठः, दैत्यश्च। अनेकार्थकोऽयम् 'असुर'शब्दोऽधुना दैत्यार्थकस्यैव वाहकः संवृत्तः। एवमेव 'अरि'शब्दोऽपि ऋग्वेदे[2] चतुरर्थक आसीत्—'अरिः = ईश्वरः, मित्रः, गन्ता, शत्रुश्चेति।' अयमेवारिशब्दः 'अर्यः = मित्रादयः, आर्यः = श्रेष्ठः' इतिरूपेणाप्युपलभ्यते। साम्प्रतमयम् 'अरि'शब्दः संस्कृतभाषायां केवलस्य शब्दार्थस्यैव संवाहको दृश्यते। [3]लैटिन-हित्तीभाषाभ्यामपि प्रायेण 'अरि'शब्दस्यैष्वेवार्थेषु संवादो भवति। यथा—'अरिः > लै० अलि > अलिउस > हिं० अर = मित्रः, भक्तः पूज्यश्चेति। अत्रावधेयं वर्तते यदिदमर्थ-परिवर्तनं सहस्राब्दिपर्यन्तमविच्छिन्नरूपेण व्यवह्रियमाणासु भाषासु भवति। अतिविस्तृत-कालसापेक्षमिदं परिवर्तनम्। एवमेवोपसर्गनिपातानामर्थाः कालक्रमेण केचिद् विस्मृताः, केचिद् विस्मारिताः, केचिच्चान्यार्थतामपि गताः। संवादयति चेदं तथ्यं बरोमहोदयः[4]।

अत्र पुनराचार्यशाकटायनगार्ग्यतत्समर्थकैः प्रवर्तितयोर्द्योतकतावाचकतावादयोः समी-क्षणमत्यावश्यकमस्ति। प्रथमं 'द्योतक' शब्देन किं गृह्यत इत्येव विचारणीयमस्ति। शाकटा-यनमतं यास्केनैवमुद्धृतम्—[5]"नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति" इति। अस्यैव

---

१. ऋ० सं० १।३५।७; 'असुरः = प्रज्ञावान्', ऋ० सं० १।५४।३; 'असुरः = दैत्यः', ऋ० सं० ५।१५।१; 'असुरः = बलवान्', ऋ० सं० 'असुरः = शत्रुः'–इति। अत्रासुरशब्दस्यार्थास्तु स्कन्दस्वामिन एव।

२. ऋ० सं० १।४।६; 'अरिः = शत्रुपर्यायोऽयमीश्वरनाम वा' ऋ० सं० ७।६४।३; 'अरिः = गन्ता, 'अर्यः = मित्रादयः' ऋ० सं० १०।२८।१ एवं १०।३९।५–'अरिः = ईश्वरः।' अरिशब्दस्यार्थास्तु स्कन्दस्वामिनोऽभिमता एव सन्ति।

३. The Sanskrit Language, p. 40; by T. Burrow.

४. "...Changes of meaning naturally acquired over so long a peried. Many of these acquired in the natural growth of the Language." [ Thc Sanskrit Language; p. 40; by T. Burrow. ]

५. निरुक्तम्—१।३।

द्योतकताप्रतिपादकस्य वाक्यस्यार्थः सर्वैर्द्योतकतापक्षाश्रयिभिराचार्यैः स्व-स्वग्रन्थे समर्थितः संपोषितश्च दृश्यते। अस्य वाक्यस्यार्थस्त्वयमेव भवति यन्नामाख्यातयोर्यः कर्म = अर्थः, तत्रोपसर्गादय उपसंयुज्य = तैः सह एकीभूय, तमेवार्थं द्योतयन्ति = विशेषयन्ति; योऽर्थो विशेषेण नामाख्याताभ्यां प्रकश्यते। अस्मिन् वाक्यार्थे प्रथमाक्षेपस्त्वयमेवोदेति यदर्थ-रहितानामुपसर्गादीनां योगस्तु भवति सार्थकैर्नामाख्यातैः, तत्कथं नामख्यातार्थेषूपसंयोगः = विशेषार्थसंयोजनं भवितुमर्हत्युपसर्गादिभिः? अपराऽऽपत्तिस्त्वियं जागर्ति यद् द्योत्यास्तु भवन्ति नामाख्यातार्थाः, न तु नामाख्याताः, यतो हि नामाख्यातानां द्योतनेनापि किम्? यदि नामाख्यातार्था द्योत्याः, न तु नामाख्याताः, तर्हि नामाख्यातार्थेषु द्योत्यमानेषूपसर्गादिभिरर्थवद्भिर्भवितव्यमेव, यतो ह्यर्थद्योतनेऽर्थस्यैवोपसंयोगः सापेक्षः। अत एवोपसर्गा द्योतका इति मतं न समीचीनं प्रतिभाति।

महाभाष्यकारस्तद्व्याख्यातारौ कैयटनागेशावपि [1]"अधिपरी अनर्थकौ" इति सूत्रं विवृण्वानाः सन्तः प्रतिपादयन्ति यत् 'अनर्थक'शब्दस्य कोऽर्थः? महाभाष्यकारः स्वयमेव स्पष्टयति यत् "ये खलु कश्चिदन्यार्थं न प्रकटयन्ति, केवलं धातुनाऽभिहितां क्रियां कथयन्ति, ते खल्वनर्थकाः" इति। यद्येवम्, तर्हि धातुभिः क्रियायां कथितायां सत्याम्, पुनस्तस्याः कथनायोपसर्गसंयोगस्यावसर एव नास्ति, "उक्तार्थानामप्रयोगः" इति नियमात्। अतः कथितस्यार्थस्य पुनः कथनायोपसर्गसंयोगस्यौचित्यमेव नास्ति। निरुक्तव्याख्याता [2]दुर्गाचार्यस्तु "धातूनामनेकार्थाः" इति सिद्धान्तं विवृण्वन् वक्ति यत् "धातवः खल्वनेकार्था भवन्ति, उपसर्गसंयोजनेन तेषामर्थेषु कश्चिदेकोऽर्थः प्रकाश्यते। अत उपसर्गसंयोगेन प्रतीयमानोऽर्थो द्योत्यार्थो भवति। उपसर्गास्तु तस्यार्थस्य द्योतका भवन्ति" इति। दुर्गाचार्यस्यायं पक्ष एव 'धातूनामनेकार्थाः' अतिदुर्बलः प्रतिभाति, यतो हि धातुनाऽनेकार्थानां बोधस्त्वभिधाशक्त्या न भवति, ते तु लक्षणया व्यञ्जनया वाभिव्यज्यन्ते। यदि धातूनामनेकार्था अभिधाशक्त्यैव बोध्यन्ते, तदा 'तिष्ठते' इत्ययं धातुर्गत्यर्थमप्यभिधाशक्त्यैव ब्रवीतु नाम, किं तत्र प्रोपसंयोजनेन? 'संतिष्ठते' इत्यनेनैव 'सङ्गच्छते' इत्यस्यार्थप्रतीतिः स्यान्नाम? एवमेव 'अवगच्छति' इत्यनेनापि 'अवतिष्ठते' इत्यस्यार्थोऽपि बोध्यतां नाम? 'आगच्छति' इत्यनेनैव 'निर्गच्छति' इत्यस्याप्यर्थबोधः कथं न भवति?

---

१. महाभाष्यम्—१।४।९३, पृ० २९६; 'कैयटनागेशावपि द्रष्टव्यौ। (मोतीलाल बनारसीदासप्रकाशनम्, १९६७ ई०)।

२. निरुक्तम्—१।३, दुर्गव्याख्या।

गच्छतिस्त्वेक एव, उपसर्गास्तु भिन्ना भिन्नाः, तेषामर्था अपि भिन्नाः। अतः समीक्षणेनैवं प्रतिभाति यदुपसर्गेष्वेवैतादृशी काचिद् विशिष्टताऽस्ति, यया स सोऽर्थो बोध्यते। [१]महाभाष्यकारेणाप्ययं पक्षः समर्थ्यते। अत एव [२]महिमभट्टस्तद्व्याख्याता रूय्यकोऽपि व्यक्तिविवेके व्यक्तो यत् "द्योतकत्वम्, प्रकाशकत्वम्, व्यञ्जकत्वञ्चेत्येक एवार्थ इति सत्यम्।......तदेवं विशेषणविशेष्यस्वरूपेऽवस्थिते सहभावावगमो द्योत्यद्योतकभावभ्रमहेतुः" इति। व्यक्तिविवेकव्याख्याता तु द्योत्यद्योतकभावस्य निस्सारतां विवृण्वन् नामाख्यातोपसर्गेषु विशेष्यविशेषणभावमङ्गीकरोति। एतेन विशेष्यविशेषणभावाङ्गीकारेण निसर्गत एवोपसर्गाणामर्थवाचकत्वमायाति।

अन्येऽप्याक्षेपाः समापतिष्यन्त्युपसर्गद्योतकतास्वीकारे। उपसर्गद्योतकतावादस्य मिथ्यात्वं प्रमाणयन्ति—'प्रऽतरम्' ( ऋ० १।५३।११ ), 'प्रऽवत्' ( ऋ० ९।७४।७ ), 'प्रऽवतम्' (ऋ० ५।३१।१), 'प्रऽवत्वती' (ऋ० ५।५४।६), 'प्रवत्वान्' ( ऋ० १।१८१।२ ) इत्यादयो वैदिकप्रयोगाः। एषु प्रयोगेषूपसर्गात् परौ द्वौ प्रत्ययौ 'वत्', 'तरश्च' दृश्येते। अत्रोपसर्गस्यावान्तरपदत्वेन प्रत्ययात् पृथक्करणमवग्रहद्वारा सम्पाद्यते। अवग्रहेण समस्तस्यैकस्वर्यमैकार्थ्यञ्च भवतः। अतोऽत्रोपसर्गाः प्रकृतिभूताः सन्तः प्रत्ययार्थास्कन्दनेनार्थवन्तो दृश्यन्ते। एषां वैदिकशब्दानां स्वतन्त्रार्थस्य संवादोऽपि भवत्यन्याभिर्भारोपीयभाषाभिः। तोलनीयं तावत् 'प्रतरः > अवे० फ्रतरः] = अग्रस्थाता ] > ग्री० प्रोतेरोस् ⌊ = अग्रतः ⌋ इत्यादिभिस्तुलाबोधकैः प्रयोगैर्योऽर्थो निष्कृष्यते, स तु प्रकृत्यंशेभ्य एवायाति, न तु प्रत्ययांशेभ्यः। समर्थ्यते सिद्धान्तोऽयं [३]मैकडानल-बैरोमहोदयाभ्याम्। अत्रैव प्रसङ्गतः 'सकृत्', 'सहस्रम्' इति द्वौ सङ्ख्यावाचकप्रयोगावपि विमर्शनमपेक्षेते। 'सकृत्' 'सहस्र'शब्दयोः समुपसर्गेणैव तत्तत्सङ्ख्ययोर्बोधो भवति। [४]ऋग्वेदे बहुत्र 'सम्' घटकसमानशब्द एकसङ्ख्यापर्यायत्वेन

---

१. "इह तर्हि व्यक्तमर्थान्तरं गम्यते—'तिष्ठति', 'प्रतिष्ठते' इति। तिष्ठतीति व्रजिक्रियाया निवृत्तिः, 'प्रतिष्ठते' इति व्रजिक्रिया गम्यते। ते मन्यामहे उपसर्गकृतमेतद् येनात्र व्रजिक्रिया गम्यत इति। "प्रोऽयं दृष्टापचार आदिकर्मणि वर्तते"—( महाभाष्यम्—१.३.१, वा० ७ )।

२. व्यक्तिविवेकः—१।७१-९२; पृ० ३०-३१; ग्रन्थसंस्करणम्—१९०९ ई०।

३. "Eight adjectives formed with the comparative suffixes 'तर' and 'र' and the superlative suffix-'म' : 'उत्तर' = higher." [ A Vedic Grammar p. 116; by A. A. Macdonell; 1966 ]

४. Sanskrit Language, P. 149; by T. Burrow. ]

५. ऋ० १०।१०।७; "उच्यते, समाने एकशब्दपर्यायोऽत्र समानशब्दः। 'समानबन्धू' ( ऋ० १।११३।२), "समानस्सन्नुभौ लोकावनुसञ्चरति" ( बृ०उ० ४।३।७ ), इति च यथा। 'समाने = एकस्मिन् योनौ।' एवम् ऋ० १०।१९१।४; 'आकूतिः = सङ्कल्पोऽध्यवसायः, समानी = एकविधोऽस्तु।' ( स्कन्दः )।

दृश्यते। ऋग्वेदस्य व्याख्यातारौ स्कन्दसायणावप्येवमेव व्याख्यातवन्तौ। यथा—सम् = समानः, समनाः = एकसदृशमना इत्यर्थः। इत्थं यथा-'समना' 'समान'घटकेन समुपसर्गेणैव एकसङ्ख्यायाः प्रतिपादनं भवति, तथैव [1]'सकृत्'घटकेन समुपसर्गेणैव एका सङ्ख्या प्रतिपाद्यते। अस्य समुपसर्गस्याथ च तन्निष्पन्नस्य 'सकृत्'शब्दस्यास्मिन्नेवार्थे संवादोऽपि भवति भारोपीयभाषाभिः[2]। यथा-सम् > अवे; प्रा० फा० हम् > प्रा० स्ला० साँ > सु > लिथु० सम् ⌊ = एकसार्द्धम्, सार्द्धम् ⌋ इत्यर्थः। एवमेव सं० सकृत् > अवे० हकॅरॅत् > लिथु० कर्तस्, > प्रा० स्ला० क्रतुः ⌊ = एकवारम् ⌋ इत्यर्थः। अनया रीत्या सङ्ख्यावाचिनोः सकृत्सहस्रशब्दयोर्विश्लेषणेनैतिहासिकदृष्ट्या भाषाशास्त्रीयदृष्ट्या चोपसर्गाणां स्वतन्त्रप्रयोगाः स्वतन्त्रार्थाश्च सिध्यन्ति। एतेषां शब्दानां विमर्शनेन महामुनि[3]पतञ्जल्याशुबोधकृद्राम[4]-किङ्करयोरिदं मतं समीचीनतरं प्रतिभाति यदुपसर्गादयोऽपि तथैव प्रकृतित्वं भजमानाः प्रत्ययानपेक्षन्ते, यथा नामाख्यातादयः। अन्येऽपि 'अधस्तात्', 'अधरात्', 'उत्तरात्तात्', 'पश्चातात्', पुरस्तात्', 'परस्तात्', 'अवस्तात्', 'उदस्तात्', अथ च 'उद्वतः'; 'निवतः', 'परावतः', 'प्रवतः', 'प्रत्नः', 'नित्यम्', 'निष्टयम्', 'उत्तरम्', 'उत्तमम्', 'प्रथमम्', 'प्रतमम्' शब्दाः 'तात्'-'वत्'-'त्व'-'त्न'-'तर'-'तम'प्रत्ययनिष्पन्नाः सन्तः [5]ऋग्वेदादद्यावधिपर्यन्तं येन केन प्रकारेण भाषायामविच्छिन्नरूपेण व्यवह्रियमाणाः स्वार्थं प्रकटयन्ति। एवमाधुनिकभाषाशास्त्रदृष्ट्याऽप्युपसर्गाणां द्योतकतापक्षे न किञ्चित् सारवत् वस्तूपलभ्यते।

निष्कर्षरूपेणात्र कानिचित् तथ्यानि प्रस्तूयन्ते। आधुनिकभाषाशास्त्रसिद्धान्तेन शब्दानां द्योतकतायाः सम्बन्धो रिक्तार्थकैः शब्दैर्भवति। आकारेषु लघुरूपतामापन्नाः शब्दास्तदैव रिक्तार्थतां व्रजन्ति, यदा तेषां भूयो भूयो वाक्येष्वावृत्तिर्भवति। आधुनिकमनो-

---

१. "सकृद्ध द्यौरजायत सकृत् भूमिरेजायत।
पृश्न्यो दुग्धं सकृत् पयस्तदन्यो नानु जायते॥" (ऋ० ६।४८।२२)
"सकृदेव = एकवारमेव द्यौः अजायत। सकृदेव भूमिः अजायत" (स्कन्दः)।

२. "This root appears in Sanskrit in its reduced form (sm = स्म्) in सकृत = once," (Sanskrit Language; P. 257; 262; by T. Burrow.)

३. महाभाष्यम्—३।१।१२; वा० '५।

४. आशुबोधव्याकरणम्—संज्ञाप्रकरणम्, सू० ३३।

५. "सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात् समेजग्मिरन् ते।
नवे पश्चातात् स्थिविमन्ते आयन् दश प्राक् सानु विति रन्त्यश्नेः॥"
ऋ० १०।२७।१५; 'प्रजापतेः पुत्राः अधरात् = अधः कायात्। उत्तरात्तात् = उत्तरात् प्रदेशात्। पश्चातात् = पृष्ठतः आयन्"—(स्कन्दः)।

विश्लेषणशास्त्रेणापीदं तथ्यं प्रमाणितं भवति। मानवबुद्धिः स्थूलार्थकान् शब्दान् सद्यो गृह्णाति, सूक्ष्मार्थकांस्तु अतिप्रयत्नेन। अतो यस्याः कस्या अपि भाषायाः स्थूलार्थाभिधायिनः शब्दा अनायासेन बुद्धिग्राह्या भवन्ति, सूक्ष्मार्थाभिधायिनस्तु प्रयत्नेन। तद्वदेव मानवबुद्धिषु शिथिलतां प्राप्तासु सूक्ष्मार्थाभिधायिन उपसर्गादयः स्मृतिपटलात् शीघ्रमेव विलुप्ता विस्मृताश्च भवन्ति। कदाचिदस्य कारणमिदमेवास्ति यद् बौद्धिकप्रयत्नेनाथ च सङ्कल्पेनैव सूक्ष्मार्थाभिधायिनः शब्दा बुद्धिं व्याप्नुवन्ति, प्रयत्नशैथिल्यं विस्मरन्ति च। इत्थं सूक्ष्मार्थाभिधायिनां शब्दानां भूयो भूय आवृत्त्या अथ च प्रयत्नशैथिल्येनैते शब्दाः (उपसर्गनिपातादयः) रिक्तार्थतां व्रजन्त इव प्रतिभान्ति। अत [1]एवाधुनिका मनोविश्लेषणशास्त्रिणः, भाषविश्लेषणशास्त्रिणश्चामनन्ति यत् प्रायेण सर्वासां भाषाणां व्याकरणेषु यो हि स्थैर्याभावः, ये विकल्पमूलकानां नियमानां व्यवहाराश्च दृश्यन्ते, तेषु मुख्यं कारणं मानवमनोभाव एवास्ति। अत एव रिक्तार्थवद् भासमानानां शब्दानामपि नास्ति बीजगणितीयचिह्नानामिव भाषायां स्थानम्। भाषासु बीजगणितीयचिह्नसदृशी एका काचन परिभाषा न भवति, यतो हि विचाराणां तार्किकाभिव्यक्तिषु मनोभावस्य मुख्यः प्रभावो भवति। येन भाषायां वैकल्पिकनियमानां प्रयोगस्तु स्वाभाविक एव। अस्या करणं तु मानवजीवनस्य तास्ता दशा एव सन्ति, याभिर्मनोभावो निरन्तरं परिवर्तितः परिवर्धितश्च भवति। इदं स्वाभाविकमस्ति यत् कालप्रभावाद् देशप्रभावाच्च भाषायां केचिच्छब्दाः सबलार्था भवन्ति, केचिच्च दुर्बलार्थाः, किन्त्विदमावश्यकं नास्ति यत् सबलार्थाः शब्दाः सदा प्राचीनतरा एव भवन्तु। अयं तु प्रयोक्तृसापेक्षो धर्मः। भाषाव्यवहर्तॄणां प्रयोगैरेव कश्चिच्छब्दः सबलार्थतां प्राप्नोति, कश्चिच्च दुर्बलार्थताम्। अत एव भाषास्वर्थसङ्कोचः, अर्थविकासः, अर्थादेशश्च भवन्ति। यथा—'तैलम्' इत्यत्रार्थविकासः, 'नेत्रम्' = द्योतनशीलम् इत्यत्रार्थसङ्कोचः, 'दुहितृ' इत्यत्रार्थादेशश्च सञ्जातः।

अनेनैव प्रयोक्तृगतधर्मेणातिप्रभाविता संस्कृतभाषा दृश्यते। कदाचिदस्यामुपसर्गाः स्वतन्त्रार्था आसन्, कदाचित् क्रियाव्यवहिताः क्रियानिरपेक्षाश्च प्रयुज्यमाना आसन्, कदाचित् क्रियानुषङ्गिणः सञ्जाताः। किन्त्वेतेन तेषामर्थविकासः, अर्थसङ्कोचः, अर्थादेशाश्चैवाभिलक्ष्यन्ते, न तु रिक्तार्थकत्वम्, अनर्थकत्वं वा। अस्य भाषाशास्त्रीयसिद्धान्तस्य विकासः संस्कृतभाषाशब्दशास्त्रेऽप्यवलोकनीयः—

---

१. "भाषा" ले० जो० वान्द्रियैज, पृ० १६२–६३,१८४।

धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
विशिनष्टि तमेवान्य उपसर्गगतिस्त्रिधा ॥[१]

अर्थात् कश्चिदुपसर्गो धात्वर्थं बाधते = अर्थादेशं करोति; कश्चित् तमनुवर्तते = अर्थं सङ्कोचयति; तमेवान्यो विशिनष्टि = अर्थं विस्तारयतीत्यर्थः । ऐतिहासिकदृष्ट्योपसर्ग-निपातादीनां वाचकताप्रख्यापने संस्कृतभाषायाः पद्यबद्धताऽथ च दण्डायमानसमासप्रणाली च मुख्यतया बाधके भवतः । प्रमाणितो भवत्ययं सिद्धान्तो [२]निरुक्तऋक्प्रातिशाख्याभ्याम्— "नेयन्त इत्यस्ति सङ्ख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे[३] च ये ।" अस्य प्रातिशाख्यस्य व्याख्यातोव्वटाचार्यो विवृणोति यत् 'ते = उपसर्गनिपाताः, मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च सङ्ख्यातुं न शक्याः ।' इदं प्रातिशाख्यवचनं सङ्केतयति यद् अमिताक्षरे = गद्ये निपातोपसर्गाः स्वातन्त्र्येण प्रयुज्यमाना आसन् । तथ्यमिदमाधुनिकभाषाशास्त्रविद्भिः [४]मैकडानल-बरो[५]-वान्द्रियैज[६]-ब्लाख[७]प्रभृतिभिरपि प्रमाण्यते । एते सर्वे मन्यन्ते यत् समस्तपदानां वाहिकासु, अथ च छन्दोमयीषु भाषासूपसर्गनिपातादयश्छन्दःपरिपूर्तिकरत्वेन, पदपूरकत्वेनापि प्रयुज्यन्ते । यतो हि यदा भाषायां कृत्रिमसमस्तपदानि निर्मीयन्ते, अथ च छन्दस्सु स्वरवर्णगणनया सन्निवेश्यन्ते, तदा सूक्ष्मार्थवाहका भाषाप्राणसदृशाश्चोपसर्गादय भाषाशरीर उपेक्ष्यन्ते । यथा मानवजीवनं यान्त्रिकसभ्यतायाः प्रभावेणातिप्रभावितं सदेक-रसतां नीरसताञ्च प्राप्नोति, तथा भाषाऽपि कृत्रिमलम्बायमानसमस्तपदानां वाहिका सती कृत्रिमतां प्राप्नोति । अतो निःसन्देहरूपेणेदं निष्कृष्यते यद् द्योतकतावादस्य प्रचारोऽवैज्ञानिक ऐतिहासिकदृष्ट्या तथ्यहीनश्च प्रतिभाति ।

---

१. जैनशाकटायनीयधातुपाठः ।
२. "मिताक्षरेष्वनर्थकाः कमीमिदु"—( नि० १।६ ) ।
३. ऋक्प्रातिशाख्यम्—१२।९ ।
४. "......However, to some extent represents better than the language of the Mantras the normal features of Vedic-syntax......" [ V. Gr. p. 1 ]
५. "......And these that remain tend to lose their significance and serve in poetry simply as devices for filling cut the metre" [ Skt.Language--p.283 ]
६. "सामान्यतः समस्तपदों का प्रयोग करनेवाली भाषाएँ इस कथन को प्रमाणित करती हैं" ( भाषा—पृ० २०१; वान्द्रियैज ) ।
७. "किन्तु यह स्वयं सिद्ध है कि छन्द सम्बन्धी विचार की प्रमुखता से व्याकरण सम्बन्धी दुर्बलता संकेतित होती है"—भारतीय-आर्य-भाषा, पृ० २४०; ज्यूल ब्लॉख ।

इत्थं द्योतकतावाचकतावादयोर्निष्कर्षं समुपस्थाप्याधुना प्रसङ्गप्राप्त उपसर्गाणां सङ्ख्याविषयेऽपि विचार आवश्यकः प्रतीयते। अत्र प्रथममेव स्पष्टीकर्तव्यमस्ति यद् गतिसंज्ञकाः कर्मप्रवचनीयसंज्ञकाश्चाप्युपसर्गेष्वेवान्तर्भवन्ति। अतस्तेषामपि गणना उपसर्गेष्वेवात्र भविष्यति। गतिसंज्ञकानां कर्मप्रवचनीयानाञ्चोपसर्गत्वमामनन्ति [१]पाणिनि-[२]पतञ्जलि-[३]कैयट-[४]नागेश-[५]जयादित्यवामन-[६]जिनेन्द्रबुद्धि-[७]हरदत्त-[८]भोजदेव-[९]सायणप्रभृतय आचार्याः। इमे सर्वेऽपि शाब्दिकाः स्वीकुर्वन्ति गतिसंज्ञककर्मप्रवचनीयानामुपसर्गताम्, यतो हि प्रादयो भवन्त एव गतिकर्मप्रवचनीयसंज्ञाभाजो भवन्तीमे। बहुत्र महाभाष्ये प्रतिपादितमस्ति यत् "गतिग्रहणमुपसर्गग्रहणं द्रष्टव्यम्" इति। परवर्ती सायणोऽपि सर्वदर्शनसङ्ग्रहे विवृणोति यत् "कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतव इति सम्बन्धविशेषद्योतनादुपसर्गेष्वेवान्तर्भवन्ति" इति। भोजदेवस्तु व्याख्याति यद् "गतिविशेषा एव प्रादय उपसर्गाः" इति। वैदिकसाहित्ये तु बहव एतादृशाः शब्दा उपलभ्यन्ते येषां परिगणनं यास्कपाणिनिभ्यामन्यैरपि शाब्दिकैः स्व-स्वप्रादिगणपाठे न कृतम्, किन्तु तेषां शब्दानां व्याख्यानं कुर्वद्भिः स्कन्दानन्तभट्टसायणप्रभृतिभिर्भाष्यकारैस्त उपसर्गत्वेन व्याख्याताः। एवमैतिहासिकानुसन्धानेनाथ च भाषाप्रवाहगवेषणेन बहव एतादृशाः शब्दा व्यवह्रियमाणा दृश्यन्ते वैदिकभाषायाम्, येषां प्रयोगा एवाधुनाऽति विरलतां प्राप्ताः, किन्तु ते तदानीमुपसर्गत्वेन व्यवह्रियमाणा आसन्।

---

१. अष्टाध्यायी—१।४।५९, महाभाष्यमपि द्रष्टव्यम्।

२. "चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः, 'आम्रेडितेष्वगतेः' सगतिरपि तिङित्यत्र गतिग्रहण उपसर्गग्रहणं द्रष्टव्यम्। अपर आह—'सर्वत्रैवाष्टमिके गतिग्रहण उपसर्गग्रहणं द्रष्टव्यम्"—( महाभाष्यम्—८।१।५७ )।

३. "'चादिषु च', 'च वा योगे प्रथमा' इत्येतयोरगतिग्रहणमनुवर्तत इति तत्राप्युपसर्ग एव गतिः"—( प्रदीपः; महाभाष्यम्—८।१।५७ )।

४. "यद्यप्यनुपसर्गा अपि प्रादयः सन्ति, तथापि प्रसिद्धत्वादेवमुक्तम्"—(उद्द्योतः, म० भा० २।१।१)।

५. "गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे"—( काशिका, अष्टा० १।४।६०)।

६. "ते ग्रहणे तूपसर्गसंज्ञा अपि निर्दिश्यन्त इति तेषामपि सम्बन्ध उपपद्यते"—(न्यासः, अष्टा० १।४।८०)।

७. "नोपसर्गास्तेन रूपेण परामृश्यन्ते, किं तर्हि? गतिरूपेण, तेषामपि गतित्वात्"—( पदमञ्जरी, अष्टा० १।४।८० )।

८. "गतिविशेषा एव प्रादय उपसर्गाः।......प्रादय एव क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः"—( शृङ्गारप्रकाशः, पृ० १५-१८; श्रीरङ्गप्रकाशनम्, १९३९ ई० )।

९. सर्वदर्शनसङ्ग्रहे पाणिनिदर्शनम्, पृ० १८५।

निबन्धस्यास्य पूर्वभागे सामान्यतयाऽऽचार्ययास्काभिमता उपसर्गाः प्रदर्शिताः। भारोपीयभाषोपसर्गैस्तेषां संवादोऽपि प्रदर्शितः। महामुनिपाणिनिस्तु [1]प्रादिगणपाठे द्वाविंशत्युपसर्गान् निर्धारितवान्। [2]तैत्तिरीयप्रातिशाख्ये दश एवोपसर्गाः सङ्ख्याताः। [3]बृहद्देवताकृदाचार्यशौनकेन पाणिनीयप्रादिपाठातिरिक्तास्त्रयोऽधिका उपसर्गाः—'अच्छ', 'श्रत्', 'अन्तर' ऊरीकृताः। [4]भोजराजोऽपि समर्थयते शौनकस्याभिमतम्। आचार्य-[5]क्षीरस्वामी, [6]जैनेन्द्रः [7]अनुभूतिस्वरूपाचार्यश्च—'अच्छ-श्रत्-अन्तर-आविस-प्रादुस्-तिरसा-श्चोपसर्गत्वमामनन्ति। [8]क्षीरस्वामी तु 'कौ'रप्युपसर्गत्वं वष्टि। इत्थं वैदिकभाषातो लौकिकभाषापर्यन्तं न दृश्यत उपसर्गाणां निश्चिता काचन सर्वमान्या सङ्ख्या। नहि केनापि शाब्दिकेनोपसर्गाणामियत्ता निर्धारिता। संस्कृतभाषायाः सम्पूर्णे शब्दशास्त्रेतिहासे तत्तच्छाब्दिकाः पृथक्-पृथगुपसर्गाणां सङ्ख्यां निश्चिन्वन्ति। अस्य मुख्यतमं कारणमिद-मेवास्ति यद् वैदिकवाङ्मयं भाषाप्रयोगदृष्ट्याऽतिवैविध्यपूर्णं विकल्पमूलकञ्चास्ति। न तत्र शब्दानां प्रयोगविषये कश्चिदभिनिवेशो दृश्यते। अत एव तत्रोपसर्गाणां स्थितिः कार्यकारण-मूलिका, उदात्तानुदात्तमूलिका, भाषाप्रवाहमूलिका च दृश्यते। अत एव प्रमाणभूताचार्येण पाणिनिनापीदमित्थन्तयोपसर्गसङ्ख्या नोद्घोषिता। वस्तुतस्तु सर्वेऽपि शाब्दिका उपसर्ग-सङ्ख्यानिर्धारणे संदिहाना इव प्रतिभान्ति। महामुनिपाणिनिरपि—[9]"अच्छ गत्यर्थवदेषु", [10]"अन्तरं बहिर्योगोपसंव्यानयोः", [11]"कुगतिप्रादयः", [12]"उपसर्गप्रादुर्भ्यामस्तिर्यच्परः", [13]"तिरोऽन्तर्धौ", [14]"पुरोऽव्ययम्" इत्यादिसूत्रेषु 'अच्छ', 'अन्तर' 'कु', 'प्रादुस्',

---

१. अष्टा०—१।४।५८ "प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप इति प्रादयः।
२. तै० प्रा०—१।१५, "आ, प्र, अव, उप, अभि, अधि, प्रति, परि, वि, नि—इत्येते शब्दा उपसर्ग-संज्ञा भवन्ति।"
३. बृहद्देवता—२।९५।
४. शृङ्गारप्रकाशः—१, पृ० १६।
५. निपाताव्ययोपसर्गवृत्तिः—उपसर्गकाण्डम्, पृ० ५२।
६. जैनेन्द्रव्याकरणम्, सू० १२९।
७. सारस्वतव्याकरणम्—सू० ८।
८. क्षीरतरङ्गिणी, चुरादिगणः, धातुसं० १५७।
९. अष्टाध्यायी—१।४।६९।
१०. अष्टाध्यायी—१।१।३६।
११. अष्टाध्यायी—२।२।१८।
१२. अष्टाध्यायी—८।३।८७।
१३. अष्टाध्यायी—१।४।७१।
१४. अष्टाध्यायी—१।४।६७।

'तिरस्', 'पुरस्'प्रभृतिशब्दानामुपसर्गसामानाधिकरण्यं स्वीकरोति। [१]"प्रादयः" इति सूत्र आदिग्रहणेनेदमेव तथ्यं सङ्केतितं भवति यत् प्रादिगणपाठस्तूपलक्षणभूत एव। वस्तुत उपसर्गास्तदतिरिक्ता अपि भवितुमर्हन्ति।

अत्र पुनर्यास्कपाणिनिभ्यामुपसर्गतयाऽङ्गीकृतेभ्यः प्रादिभ्योऽतिरिक्ता उपसर्गा विमर्शयिष्यन्ते, येषां व्यवहारा उपसर्गरूपेणैव वैदिकभाषातः प्रायः समस्तासु भारोपीयार्यभाषासु दृश्यन्ते। इदमप्यत्रावधारणीयं वर्तते यच्छब्दाः परस्परार्थदृष्ट्या सापेक्षा भवन्ति। शब्दानामर्थसापेक्षसिद्धान्तोऽयं [२]स्कन्दस्वामिना, अथ चाचार्यपतञ्जलि[३]–कैयट–नागेशादिभिरपि पुरस्कृतः। महाभाष्यकारवाक्यं विवृण्वताऽऽचार्यनागेशेन प्रतिपादितं यत् "यथा लोकः स्वसजातीयमेव सहायमुपादत्ते, एवं शब्दोऽपि प्रयोगे सहायं सजातीयमेवोपादत्ते, न तु विजातीयम्" इति। एतेन निष्कृष्यते यच्छब्देष्वर्थसापेक्षता भवत्येव। आधुनिकभाषाशास्त्रिणा [४]वान्द्रियैजमहोदयेनाप्यनुमन्यतेऽयं सिद्धान्तः। एवं शब्देषु परस्परमेषा सापेक्षता निरपेक्षता च मानवमनोभावमूलिके स्तः। निपातोपसर्गास्तु मानवमनोभावैरतिप्रभाविताः सन्तो भाषायां व्यवह्रियन्ते। अत एव नाटकीयभाषायां निपातोपसर्गाणां प्रयोगा मनोभावरूपरूपिता एव दृश्यन्ते। अत्राधस्तादुदाहरणतया केचनैतादृशा वैदिकभाषोपसर्गाः प्रस्तूयन्ते, येषां संवादः प्रायस्तेष्वेव ध्वनिग्रामेष्वर्थेषु च भारोपीयार्यभाषोपसर्गैर्भवति।

**"अच्छ"**

'अच्छ'शब्दः [५]वैदिकभाषायां बहुभिर्धातुभिः सहोपसर्गतयाऽनुपज्यते, यथा 'अच्छ + √इ > अच्छएति = अभ्येतीत्यर्थः।' 'अच्छ + √गम्'; अच्छ + √चर'; 'अच्छ + √द्रु'; 'अच्छ + √धन्व'; 'अच्छ + √नक्ष > अच्छनक्षते = अभिगच्छतीत्यर्थः।'

१. अष्टाध्यायी–१।४।५८।

२. ऋ० मं०–१।५४।३; ६।४७।२९; १०।२६।१०; १०।३२।९; 'तच्छब्दाद् योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः।" ""स' इति तच्छ्रुतेर्यच्छब्दोऽध्याहार्यः"—( स्कन्दस्वामी )।

३. महाभाष्यम्–१।३।१९। कैयटोऽपि द्रष्टव्यः।

४. "शब्दों में एक प्रकार का सापेक्ष अर्थवैज्ञानिक महत्त्व होता है"—( भाषा–वान्द्रियैज )।

५. ( क ) ऋ० सं०–१।२।२; ३।१४।३; ३।५३।४; ६।२२।५; ६।४४।१५; ६।४५।९; ६।४९।४; १०।३०।१। शुक्लय० १५।२४; २६।४; २७।२४। ऋक्तन्त्रम्–५।७।४।

( ख ) Mcldonell–V. G. p. 415; M. M. William–Skt. Eng. Dictionary–p. q; Whitnep–Skt. Gramenar–p. 397; Turner–A Comprative and Etymological Dictienary of the Nepali Language p. 7; V. S. Apte–The Skt.–Eng. Dictionary p. 29; Kielharn– Grammar of the Skt. Language–p. 206.

'अच्छ + √नश'; 'अच्छ + √नी'; 'अच्छ + √नु'; 'अच्छ + √पत् > अच्छपतयत् = अभिलक्ष्य आगच्छतीत्यर्थः ।' 'अच्छ + √ब्रू'; 'अच्छ + √या > अच्छयाति = तीव्रं यातीत्यर्थः ।' 'अच्छ + √वच् > अच्छवदति = साधूच्यत इत्यर्थः। '

## "अन्तर्"

'अन्तर्' शब्दोऽप्युपसर्गतया बहुत्र प्रयुज्यते धात्वनुषङ्गेण । यथा—'अन्तर + √इ > अन्तरेति = प्रविशतीत्यर्थः ।' 'अन्तर् + √गम्'; 'अन्तर् + √धा > अन्तर्दधत = व्यवधानमकुर्वत इत्यर्थः ।' 'अन्तर् + √भू', 'अन्तर् + √विद् > अन्तर्वेत्ति = जानातीत्यर्थः ।'

अन्यास्वपि भारतीयार्यभाषा'स्वस्योपसर्गरूपेणैव व्यवहारो भवति । यथा— 'अन्तर् > प्रा० अन्तरु > अन्दर > अदर > अतलं > अन्तो > तरई > मराठी 'अड्ड' > कन्नड 'अड' इति । 'अन्तःपुरिका > प्रा० अंतेउरिगा > अंतेउरिया > अंतेउरी > मरा० अन्तौरी > अन्तौर' इति । इत्थं विभिन्नास्वार्यभाषासु[२] अस्योपसर्गस्य समानो विकासो रूपनिर्माणञ्च दृश्यते ।

## "बहिस्"

'बहिस्'—[ = बाह्ये बहिः ] उपसर्गोऽयं प्रायेण '√कृ' '√भू', '√गम्', '√या'धातुरित्यनुषज्यते । प्रायिकत्वेन 'बहिसः' सकारो रेफत्वमपि व्रजति । वैदिकभाषायां तु 'बहिसः' स्थाने 'बहिरा' इति प्रयोगोऽप्युपलभ्यते—"भोजनं दिवा बहिरा[३] स्याद् व्रतान्ते [ = बहिरा स्याद् = वसेदित्यर्थः ] ।" अन्यास्वपि भारतीयार्यभाषासु संवदन्नयमुपसर्गोऽवलोकनीयः । 'बहिरर् > स् > प्रा० बाहिर् > बाहिरि > बाहिल > बाहि > बाह >

१. ( क ) ऐ०ब्रा० ३।६; सायणभाष्यमपि । अष्टा० ६।३।९७; न्यासोऽपि । भागवतपु० ३।२९।२६; सरस्वतीकण्ठा० २।४।१४६ । शाकटायनव्याकरणम्–४।२।२४३–४६,४८–५१ । प्राकृतशब्दानुशासनम्, पृ० २४५; कर्पूरमञ्जरी, पृ० ७७; मृच्छक०, पृ० २६९; मालविकाग्निमि०, पृ० ५५; मराठीव्युत्पत्तिकोशः. पृ० १९ ।

( ख ) V. G. p. 416; S. E. Dict. p. 43; S. G. p 397; Grammar of Skt. Language p. 207; Comp. Gra. of Skt. GK. & Latin p. 140; Comp. & Etymo. Dict. of Nepali Language–p. 15; Skt Language– p. 158–180, 343.

२. तोलनीयम्–अन्तर् > Av. Antare, O.–'inter'; U 'ihdu'; G K–'Evdod'; Goth– undar'; O. U 'enter'; N. U–'ander'; Eng.–'under'. [ A Comparative Grammar Skt. Greek & Latin–p. 140 ]

३. सामविधानब्राह्मणम्–१।६।१ ।

नेपाली-ब्रहु' इति। इत्थं भारतीयभाषाणां सुदीर्घतम इतिहासप्रवाहेऽयम् 'ब्रहिस्' उपसर्गरूपेण प्रयुज्यमानः सन्-स्वकीयार्थसामर्थ्येनान्तरशब्दमप्युपसर्गतयैवापेक्षते। प्राचीन[2]स्लावोनिक-भाषायाः 'वेज़ु' इत्युपसर्गेणाप्ययं ध्वनिसमुदायेनार्थेन च संवदति। 'ब्रहिस्>' Vezu (वेज़ु) ⌊=बाह्ये⌋ इत्यर्थः।

## "आविस"

'[3]आविस्' इत्ययमुपसर्गः प्राकाश्यार्थे=स्फुटत्वे प्रयुज्यमानः सन् 'प्रादुस्' उपसर्ग-मपेक्षते। आविसः प्रयोगोऽपि प्रायेण—√'कृ', √'भू', √'अस', √'एध'प्रभृति-धातुभिः सह भवति। यथाऽन्येषाम्—'प्र', 'सम्', 'अभि', 'परा'प्रभृत्युपसर्गाणां प्रयोगा अभ्यासयुक्ता अवलोक्यन्ते वैदिकसाहित्ये, तथैवास्यापि प्रयोग [4]ऐतरेयारण्यके साभ्यासोऽव-लोक्यते क्रियानुगुण्येन। एतेनास्योपसर्गतायाः सिद्धान्तः स्वत एव सिद्धो भवति। [5]ग्रीक-लेटिनभाषयोरप्यस्य संवादो महत आश्चर्याय कल्पते। [6]शतपथब्राह्मणभाष्यकृता वासुदेवेन तु प्रतिपदोक्ततयाऽस्योपसर्गता व्याख्याता। ऋग्वेदभाष्यकृता [7]स्कन्दस्वामिना तु 'आविसः' आख्यातेन सह सम्बन्धं स्थापयताऽस्योपसर्गत्वपक्ष एव समर्थितः।

---

१. (क) सामविधानब्राह्मणम्—२।६।२; मृच्छकटिकम्, पृ० ७७; प्राकृतमणिदीपः, पृ० ३५८; कर्पूरमञ्जरी १-३४; उक्तिरत्नाकरः, पृ० २७; प्राकृतशब्दानुशासनम्, पृ० ६४; कुमारपाल-चरितम् ३।७२।

(ख) V. G. P. 423; Skt. Language—P. 24; Skt. Grammar—P. 397; Introduct. of Skt. Grammar—P. 101..., Skt. Eng. Dictionary—727; Comp. Etymological Dict. of Napali—P. 427; Historical Syntax of Middle Indo-Aryan—P. 82.

2. Sanskrit-Language—P 24.

३. (क) ऋ० सं० २।९५।५; ६।४८।१५; १०।२७।४; स्कन्दभाष्यमप्यवलोकनीयम्। तै० प्रा० ८।२४; छन्दोदर्शनम्—२।४।८ विदग्धमाधवम्—६।१२; "क्रूरं वंशि न जीवनं न च मृति-र्घोराविरासीद् दशा"—'आविर्+√अस>आविरासीत=प्रादुर्बभूवेत्यर्थः।'

(ख) V. G. P. 350. Skt. Grammar—P. 397. Kiclharm,s—S. Gr. P. 207, Skt. Eng. Dict. of Ñepali Language—P. 39. Intro. of Skt. Gr. P. 102. Skt. Language P. 344.

४. ऐतरेयारण्यकम्—२।३।६; २।७।१।

५. तोलनीयम्—'आविस्>G. K. E,E; Latjn—cx=before Vheeyes, openly.'

६. शतपथब्राह्मणम्—१४।२।५।१६; "आविस्' इत्ययमुपसर्गः प्रकाशवचनः"–(वासुदेव-प्रकाशिका)।

७ ऋ० सं० १०।२७।२४ "आविः शब्दः कृणुते इत्याख्यातेन सह सम्बन्धयितव्यः"—(स्कन्दः)।

## "प्रादुस्"

एवमेव प्रादुसोऽपि स्थितिरवगन्तव्या, यतो ह्यनयोः (आविस्-प्रादुसोः) शब्दयोः परस्परार्थसापेक्षत्वं वर्तते। प्रायेण सर्वैः प्राचीनार्वाचीनसंस्कृतशब्दशास्त्राचार्यैः[१] 'प्रादुसः' उपसर्गता स्वीकृता। अस्यापि व्यवहारः √'अस', √'भू', √'कृ' धातुभिः सह प्रायेण दृश्यते। [२]कृष्णाचार्योऽपि स्वीय उपसर्गार्थसङ्ग्रहे 'आविस्-प्रादुसोः' उपसर्गतामेव निश्चिनोति।

## "उपरि"

'उपरि'शब्दव्यवहार उपसर्गरूपेण दृश्यते [३]संस्कृतभाषायाम्। अस्य प्रयोगस्तु प्रायेण √'गम्', √'या', √'स्था'धातुभिर्भवति। वैदिकभाषात आरभ्य प्रायेण सर्वासु [४]भारोपीयार्यभाषासूपसर्गरूपेणैवास्य प्रयोगो दृष्टिपथमायाति। अत्रैतदपि कल्पयितुं शक्यते यत् पाणिनेः प्रादिपाठे परिगणितः 'परि' उपसर्गः 'उपरि' उपसर्गस्यैवावशिष्टो लुप्तोकारः प्रतीयते। यतो हि [५]ऋग्वेदे 'परि'शब्दः 'उपरि'शब्दस्यार्थे दृश्यते। तद्व्याख्याता स्कन्दस्वामी वक्ति यद् 'उपरि'शब्दस्योकारलोपः सञ्जातः। किं बहुना 'उपरः' इति प्रयोगोऽपि 'उपरि'शब्दस्यार्थे दृश्यते [६]ऋग्वेदे। एभिः प्रमाणैः कल्प्यते यत् 'परि' उपसर्गस्य विकासः 'उपरि' इत्युपसर्गेण समजनि।

---

१. (क) अष्टाध्यायी—८।३।८७; दुर्घटवृत्तिः—३।३।२४; उपसर्गार्थसंग्रहः, पृ० ७; सरस्वतीकण्ठाभरणम्—१।१।१४०; निपाताव्ययोपसर्गवृत्तिः—१।४।७४; वाचस्पत्यम्, पृ० ४५२४।
(ख) V. Gr. P. 350; Skt. Language-P. 344; Skt. Dict. P. 707; Skt. Gr. P. 396; Comp. Dict. of Nepali Language P. 397.

२. उपसर्गार्थसंग्रहः—वा० सं० वि० वि० सरस्वतीभवनहस्तलिखितग्रन्थः; ग्रं० सं० ३८१५१।

३. V. Gr. P. 156; Skt. Syntax-P. 115; Skt. Language—P. 153.

४. तौलनीयम्—उपरि>ɡv. upairi; Pers. bar; GK. ʊttE P; Lat. super; Gath. ufar; O. Germ. abar; N. Germ. uber; ɡnglo-Saxon-afer, Eng. over.

५. (क) ऋ० सं० १०।१८।१३; "त्वत परि = पञ्चम्यर्थेऽत्र पञ्चमी, उपरिशब्दस्य च उकारलोपः। तवास्थिकुम्भस्य च तवोपरि"—(स्कन्दस्वामी)।
(ख) ऋ० सं० १०।१३५।८ "विप्रेभ्यस्परि = विप्रेभ्यः = मेधाविभ्यः, परि = उपरीत्यर्थः"—(स्कन्दस्वामी)।

६. ऋ० सं० १०।२७।२०; "उपरो बभूवान् = उपरि सदृशो भवन् मेघ इव शीघ्रगतिः सन्नित्यर्थः"—(स्कन्दस्वामी)।

आधुनिकभारतीयार्यभाषा[१]स्वस्य प्रयोगस्तूपसर्गरूपेणैव दृश्यते—'उपरि > प्रा० उप्परि > सिंधी ओप्पिरो > गुज० उपरी > मरा० उपरु > हिं० उपर > मरा० हुपरि > प्रा० उवरि > ओवरि > वोरि > वरि > अवरि'इत्यादिः।

## "अधस्"

'उपरि' इत्युपसर्गवत् 'अधस् > ( स् > र् ) अधर्' इत्यस्योपसर्गत्वेन व्यवहारः [२]संस्कृतभाषायामुपलभ्यते। [३]यूरोपीयार्यभाषास्वप्यस्य संवादोऽवलोकनीयः। इदमत्राव-धारणीयं वर्तते यच्छब्दाः परस्परानुकूलार्थेषु सापेक्षा भवन्त्येव, प्रतिकूलार्थेऽपि तत्तच्छब्दानां सापेक्षत्वमपेक्ष्यते। यतो हि प्रतिकूलार्थानां शब्दानां सापेक्ष्यमनपेक्ष्य भाषायां न तादृशार्थ-प्रवाहोऽन्यथा परिवर्तितुं शक्यते, यथा परस्परप्रतिकूलार्थकैः शब्दैः परिवर्त्यते। 'उपरि'-शब्देन यादृशोत्कर्षभूतस्यार्थस्याभिव्यक्तिर्भवति, तद्वदेव 'अधस्'शब्देन तद्विपरीतानूर्ध्व-रूपार्थः कथ्यते। अत एव शब्दा अनुकूलार्थेऽपि सापेक्षा भवन्ति, प्रतिकूलार्थेऽपि। अस्य सापेक्षसिद्धान्तस्य 'उपरि-अधसोः'उपसर्गतासिद्धान्तस्य च सर्वोत्तमं निदर्शनम् [४]ऋग्वेद उपलभ्यते। 'अधस्' उपसर्गस्य प्रयोगः √'कृ', √'गम्', √'चर', √'दृश्', √'पत्', √'भू', √'स्था'प्रभृतिभिर्धातुभिर्दृश्यते। गीतायाः[५] 'अधो गच्छन्ति तामसाः' इति सुप्रसिद्धः प्रयोगोऽस्य सुष्ठु निदर्शनमस्ति। अन्यास्वपि [६]भारतीयार्यभाषास्वस्य संवादा-त्मकः प्रयोगो भाषाशास्त्रीयमहत्त्वमङ्गीकरोति।

---

१ प्राकृतप्रकाशः, पृ० १३७; प्राकृतशब्दानुशासनम्, पृ० २७५-७६; देशीनाममाला, पृ० १६१; सेतुबन्धकाव्यम् ८-७५; कुमारपालचरितम् १-१३; प्राकृतमणिदीपः, पृ० ३५०; मृच्छक-टिकम्, पृ० ७६; विदग्धमाधवम्, पृ० १९२; मराठीव्युत्पत्तिकोशः, पृ० १०३ इति।

२. (क) ऋ० सं० ३।३०।१६, ७।१०४।११, ८।३३।१९, १०।३६।१४, ११९।११, १२९।५, १६६।२; गीता १४।१८।

(ख) V. Gr. P. 278; Skt. Syntax—P. 115; Skt. Language - P. 152; Skt. Eng. Dict. P. 19-20; Ave. Gr. P. 204; Science of Etymo-loge-P. 71.

४. "अधः पश्यस्व मोपरि संतरां पादकौ हर"—(ऋ० ८।३३।१९)। 'अधः+√दृश् > अधः पश्यस्व। उपरि+√दृश् > मा उपरि पश्यस्व'—( व्यंकटमाधवीयावृत्तिः )।

५. भगवद्गीता ४१।१८।

३. तोलनीयम—'अधर्' > Ave. adairi; Lat. infra; Cath. under; Anglo-Sax. under; Eng. under = Lower, below'

६. प्राकृतशब्दानुशासनम्, पृ० २६२; सेतुबन्धकाव्यम्, पृ० ७-१८ प्राकृतसुभाषितावलिः, श्लोक० ४०७; उक्तिरत्नाकरः, पृ० ३५; गिरनार-ब्रह्मपुर-शाहबाज-गढ़ी-धौली-कालपी-अशोका-भिलेखः; तुलनात्मकपालि-प्राकृत-अपभ्रंशव्याकरण, पृ० १४८।

'अधस् ≥ प्रा० ओधा ≥ अहो > पा० इह > इध > हिद > हिदा > इय > इश' इति। अधोमुखी > अहोमुही; अधःपुष्पी > ओधाफुल्ली > ओधाइली' इति।

## "तिरस्"

'तिरस्' उपसर्गः[१] 'पुरस्'उपसर्गेण सापेक्षः सन् प्रायेण √'कृ', √'गम्', √'धा', √'भू'धातुभिरनुयुज्यमानोऽवलोक्यते। अस्योपसर्गस्य समानो विकासः प्रधानासु भारोपीयार्यभाषासु[२] द्रष्टुं शक्यते। [३]ऋग्वेदव्याख्याता स्कन्दस्वामी तु 'तिरसः' उपसर्गत्वमेवोद्घोषयन्नाह—"कर्मोपसर्गश्रुतेरत्र योग्यक्रियाध्याहारः, तमस्तिरोऽत्र करोति क्रियाध्याहारेण, तमस्तिरस्करोति = सर्वलोकप्रकाशो भवतीत्यर्थः।" इत्थं 'तिरसः' उपसर्गत्वे सिद्धे 'पुरसः' अप्युपसर्गत्वं स्वत एव सिद्धं भवति।

[४]प्राकृतादिभाषास्वप्यस्य संवादोऽवलोकनीयः—'तिरस् > प्रा० तिरख्, तिरश्च > प्रा० तिरिच्छि > तिलिश्चि; पा० तिरोक्ख, तिरस्कारः > प्रा० तिरक्कारो, तिरस्करिणी > देशी-टट्टइया > टाटी'इति। [५]टर्नरमहोदयोऽप्युदाहरति तत्तद्भारतीयार्यभाषाभिरस्य संवादम्।

## "पुरस्"

'तिरस्'शब्दवत् [६]पुरसोऽप्युपसर्गत्वं सिध्यति। आचार्यपाणिनेः प्रादिगणपाठे स्वीकृतस्य 'परा' इत्युपसर्गस्य 'पुरा' इत्यव्ययस्य, अथ च 'परस्' इत्यस्यापि विकासः 'पुरस्'

---

१. (क) ऋ० सं० १।४६।६; ६।४८।६, ७।४।२; काव्यालङ्कारसू० ५।२।११; सरस्वतीकण्ठा० १।११।५१; निपाताव्ययोपसर्गवृत्तिः, पृ० ५२; शब्दानुशासनम्—५-२९।

(ख)—V. Gr. P. 350; Skt. Syntax—P. 115; Skt. Language. P 342; Skt. Gr. P. 397; comp. Dict of Indo-Aryan-Languages-8. 33S; gv. Gr. P. 204; comp. Gr. ( ciark,s )-P. 332.

३. ऋ० सं० १।४।६; स्कन्दस्वामिनो भाष्यमप्यवलोकनीयम्।

२. तोलनीयम्—'तिरस्>Ave. taro; Goth. thairh; Germ. durch; Hib. tar, tair, Eng. through,

४. प्राकृतशब्दानुशासनम्, पृ० २२४; प्रबोधचन्द्रोदयम्, पृ० ४१; देशीनाममाला, पृ० १५७; मालविकाग्निमित्रम्, पृ० २१।

५. तोलनीयम्—'तीरस् >Pa. tiro. Pr. tirikkha, S. tirko, P. tirkauna, G. tirgas, M. tirga, tirpa, tirde, tirla; tirva=acceross, beyond.'

[ A compa. Dict. of the Indo-Aryan-Languages P. 331 ]

६. (क) द्र० ऋ० सं० ३-२२-३; तै० सं० ७-४-१; शुक्लयजु० म० १७-१९; भागवतपुराणम् ५-८-१४।

(ख)—V Gr. P. 278-79, Skt' Gr. P. 397, Sgt. Syntax-P 114, Skt. Eng. Dict. P. 634, comp and Etymo. Dict. of Nepali-Language P. 358, comp. Gr. of the Skt. Gk. & Lat. P 81, Ave Gr P 203

इत्युपसर्गेण सञ्जात इत्यपि कल्पितुं शक्यते, यतो हि वैदिकभाषायामुपसर्गाणामादिमस्यान्तिमस्य चाक्षरस्य वर्णस्य वा लोपः स्वाभाविकतया दृष्टचरः। सैव लोपपरम्परा 'परस्-परा' इत्यनयोरपि संभवति। 'पुरा' इत्यत्र तु दीर्घत्वरूपो वर्णविकारः कल्प्यते। वस्तुत एकस्यैव मूलभूतस्य 'पुरस्'शब्दस्य 'पुरस् > पुरा > परा > परस्' इति रूपेण विकासः सञ्जात इति प्रतिभाति। 'पुरस्' उपसर्गोऽयं [१]भारोपीयार्यभाषोपसर्गेणापि संवदन् सन् प्रायेण √'कृ', √'गम्', √'धा', √'नी', √'मुच्'प्रभृतिभिर्धातुभिः सहोपसर्गतयैव प्रयुज्यते। पालि-प्राकृत-अपभ्रंशभाषास्वप्यस्य विकासोऽवलोकनीयः[२]।

'पुरस् > प्रा० पुरो > पा० पुलो; पुरतः > पुरओ, पुटमं; पुरोभवम् > प्रा० पुरिल्लं; 'पुरस् + √ कृ > पुरस्कृत्य > प्रा० पुरोकरिअ = सत्कृत्येत्यर्थः। 'परस् + परस् > परस्परम् > प्रा० अवरुप्परु > अवतुप्यतु = अन्योन्यमित्यर्थः।'

## "सु"

सोरुपसर्गत्वं नाविदितमस्ति संस्कृतभाषाऽध्येतृभिः, अतोऽत्र न विमर्शयिष्यते तस्मिन् विषये। केवलमत्र 'कु' उपसर्गेण सह सापेक्ष्यमेव प्रदर्शयितुं प्रवृत्तः सः।

कुः ⌊ = कुत्सितेत्यर्थः ⌋ ।

कोरुपसर्गस्य प्राथमिकः प्रयोग ऋग्वेदसंहितायामुपलभ्यते—[३]"मृगो न भीमः कुचरो गिरिष्ठाः" इत्यत्र। तत्राचार्यसायणो व्याख्याति यत्—'कुचरः = कुत्सितहिंसादिकर्तेत्यर्थः।' अन्यत्रापि [४]ऋग्वेदेऽस्य प्रयोग उपसर्गरूपेणावलोक्यते। [५]तैत्तिरीयसंहिताभाष्यकारेण भट्टभास्करेण तूपसर्गत्वमङ्गीकृत्यैवास्य व्याख्याऽकारि—'अकवारिम = अकुत्सितारिमित्यर्थः।' अस्य प्रयोगस्तु प्रायेण √'चर', √'वच', √'स्मे'[६]धातुभिर्भवति। सुकुमारशब्दः सुष्ठु

---

१. तोलनीयम्—'पुरस् > ṛve paro, Gk IIa pos = before

२. प्राकृतशब्दानुशासनम्, पृ० १०४; कर्पूरमञ्जरी—४-१९; सेतुबन्धकाव्यम्—८-४०; कुमारपालचरितम्—१-८७; प्राकृतमणिदीपः, पृ० ३५७; भविसयत्तकहा, संधिः ५; मालविकाग्निमित्रम्, पृ० १९, ४४; मृच्छकटिकम्, पृ० १६६।

३. ऋ० सं० १।१५४।२।

४. ऋ० सं० १०।१८०।२, 'कुचरः = कुत्सितचरणेत्यर्थः'—( सायणाचार्यः )

५. तै० सं० १।४।१७।

६. क्षीरतरङ्गिणी, चुरादिः १५७; 'कुस्ममिति प्रकृत्यन्तरं दृष्टम्—'कुपूर्वात् स्मयतेः। कुस्मयते, कुस्मयति'—( क्षीरस्वामी )।

निदर्शनमस्योपसर्गताप्रख्यापने। प्राकृतादिभाषास्वप्यस्य सुकुमारशब्देन [१]संवादोऽव-लोकनीयः—'सु+कु+√मृ>सुकुमारम्>प्रा० सुखुमार > सोउमार > सोमारो = मृदुलमित्यर्थः'। सुकुमारशब्दे परस्परविरुद्धार्थसापेक्षयोः( सु+कु ) उपसर्गयोरेकत्रैवार्थ-समर्पणमवलोक्यते। [२]नेपालिभाषायामपि 'कोः' संवाद उपसर्गरूपेणैव दृश्यते। [३]मोनियर-विलियम-[४]टर्नर-[५]बरोमहोदयैरप्ययं 'कुः' उपसर्गतयैव व्याख्यातः।

## श्रत् ∟ = आस्तिक्यबुद्धौ ⌋

श्रदित्ययमुपसर्गः प्रायेण √'कृ', √'दा', √'धा'प्रभृतिधातुभिरनुपज्यते। अयं शब्द उपसर्गरूपेणैव [६]संस्कृतभाषायां तु व्यवह्रियत एव, अन्यास्वपि [७]भारोपीयार्यभाषा-सूपसर्गतयैव व्यवह्रियमाणोऽवलोक्यते। प्राकृतादिभाषास्वयं 'श्रत्' तथैवोपसर्गरूपेण स्वी-कृतोऽस्ति यथा—संस्कृतभाषायाम् 'श्रत्+√धा>श्रद्धा>प्रा० सद्धा<सड्ढा> सड्डा; श्राद्धः>सराध>षधु; श्रद्धते>[८]सद्दहइ=विश्वसितीत्यर्थः।'

---

१. गाथासप्तशती—२-८९; अभिज्ञानशाकुन्तलम् ६,पृ० २२०; पालिप्राकृत-अपभ्रंशव्याकरणम्,पृ० २९।

२. A comp and Etym. Dict. of the Nepali Language, P. 198.

३. Skt. Eng. Dict. P. 285.

४. A Comp. Dict. of the Indo-Aryan Languages, P. 163.

५. "Sanskrit-'KAVA' and related words" by-T. Burrow,-Indian Languistics-Volume-15, November-1955.

६. (क) ऋ० सं० १।५५।५, १०४।६, २।१२।५, ८।७५।२; निरुक्तम्‥‥‥बृहद्देवता २।९५; काशिका ३।३।१०६; सारस्वतसूत्रपाठः,प्रक्रियाकौमुदी ३।३।१०६; मृच्छकटिकम् ३-२५ ( लल्लदीक्षितटीका )।

(ख) V. Gr. P. 350, Skt. Gr. P. 397, Introduction. to the Gr. of the Skt. Language, P. 102, Skt. Eng. Dict., P. 1095, Comp. and Etym. Dict. of the Nepali Language-P. 575, Comp. Dict. of the Indo-Aryan Languages, P. 736.

७. तोलनीयम्—'श्रत+√धा>श्रद्धा>Ave. Zarzda, old Pers. third, N. Pers. Sada, Lahnda-Sad, Lat. credo for 'cred-do', G. K. Kapdia, Indo-Germ. Kred, Lithuani-Kerdus, Ayarisacretim, Goth. herd, Anglo-Saxon-hearte, Eng. heart.'

८. प्राकृतशब्दानुशासनम्, पृ० ९; प्राकृतमणिदीपः, पृ० ३६१; कुमारपालचरितम् ३-१२; उक्तिरत्नाकरः, पृ० ९; मराठीव्युत्पत्तिकोशः, पृ० ६९७; तुलनात्मक-पालि-प्राकृत-अपभ्रंशव्याकरणम्, पृ० ४८।

एवं कतिपयानामुपसर्गाणामत्र विमर्शनं कृतम्, तेषां संवादोऽपि भारोपीयार्यभाषाभिः प्रदर्शितः। भारोपीयार्यभाषास्वेषामुपसर्गाणां संवादो न केवलं सांयोगिकः, प्रत्युत भाषाप्रसार-मूलकः, संस्कृतिमूलकः कौटुम्बिकसामीप्यमूलकश्चास्ति। आसीत् कदाचित् पुरा स समयः, यस्मिन् समस्ताऽऽर्यजातिरेकस्मिन्नेव कौटुम्बिकसंस्कारसूत्रे प्रतिबद्धाऽऽसीत्। तस्याश्चिन्तन-प्रवाहस्य, भाषागतसौन्दर्यविधायकतत्त्वस्य, दार्शनिकविश्लेषणबीजस्य, अङ्कविद्याया अन्वे-षणस्य च विकासः कस्मिंश्चिदेकस्मिन् भूमिभागे समृद्धिं प्राप। तदनन्तरं सा जातिः पृथक् पृथग् निकायरूपेण क्रमशः समस्तां वसुधां व्याप्नोत्; किन्तु तस्या यानि भाषा-संस्कृति-दर्शन-विज्ञानमूलकसंश्लेषसूत्राण्यासन्, न तानि तद्वद् विश्लिष्टतां प्राप्तानि, यथा भूमिभागस्य विश्लेषः सञ्जातः। अत एव भाषागतसम्बन्धः संवादश्चाधुनापि येन केन प्रकारेण संरक्षितः संतोषितश्च वर्तते। यदि कश्चिच्छब्द उपसर्गरूपेण संस्कृतभाषायां न व्यवह्रियते, किन्तु अवेस्ता-फारसी-ग्रीक-लैटिन-गाथिकप्रभृतिभाषासूपसर्गत्वेन तस्मिन्नेव ध्वनावर्थेषु च स व्यवह्रियमाणो दृश्यते, तदेदं स्वाभाविकमस्ति यत्तस्य सङ्कलनं निर्धारणञ्चोपसर्गतयैव भवेत्। तोलनात्मकभाषाशास्त्रस्याप्ययमेवाग्रहः।



# शिववायुपुराणयोर्महापुराणत्वसमीक्षा

डॉ० श्रीकृष्णमणित्रिपाठी, विभागाध्यक्षः
पुराणेतिहासविभागे, वा० सं० वि० वि० ।

संस्कृतवाङ्मये पुराणानामस्ति एकं विशिष्टं स्थानम् । वेदस्मृत्योरनन्तरं पुराणानामेवास्तिकजगति प्रामाण्यमङ्गीक्रियते । यतोऽत्र वेदार्थमेव स्पष्टीकर्तुं ज्ञानकर्मोपासनानां सिद्धान्ता अतिसरलया भावगम्यया भाषया विविधाभिर्भक्तप्रवराणां कथाभिः सम्यग् बोधिताः सन्ति, येषां मननद्वारा साधारणबुद्धयोऽपि जना व्यावहारिकीं स्थितिं सम्पादयन्तो वेदोपनिषत्प्रतिपाद्यं मानवानां प्रधानं लक्ष्यं परमात्मानं प्राप्य मुक्ता भवितुमर्हन्ति । वेदानां यथार्थमवगन्तुं पुराणानामस्ति पूर्णः सहयोगः । अतो वेदार्थानां विस्ताराय पुराणानुशीलनस्यावश्यकता प्रदर्शिता महाभारते—

इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥
(म० भा०, आदिप० १।२६७)

अतो भगवन्निःश्वासरूपापौरुषेयवेदवत् पुराणानामपि प्रामाण्यं सिध्यति । वस्तुतोऽनादिपरम्परातः प्रचलिताया भारतीयसंस्कृतेः सदाचारस्य वर्णाश्रमधर्मस्य समस्तस्य समाजस्य सम्पूर्णस्य राष्ट्रस्य च मर्यादासंरक्षणं यथा वेदैर्विधीयते तदनु स्मृतिभिः सम्पाद्यते, तथैव पुराणैरपि क्रियत इति न संशयग्रस्तम् । वेदानां दुरूहतया तदीयतत्त्वसाक्षात्कारो यादृक् काठिन्यमावहति, न तादृक् सरलातिसरलभाषानिबद्धानां पुराणानामस्ति काठिन्यम् ।

साधारणेष्वपि जनेषु वेदरहस्यज्ञानस्यावश्यकत्वमनुभूय भगवान् कृष्णद्वैपायनो पुराणानि रचयाञ्चकार, कृतवांश्च तत्र ज्ञानकर्मोपासनापेक्षया ऋजुभिरुपायैर्मानवमात्रेणाचरणीयस्य भक्तिमार्गस्याविष्कारम् । अतो निखिलानां जनानां कल्याणकारिभिरुपायैः परिपूर्णानां पुराणानामनुशीलनेन भवति मानवताया जागर्तिः, सम्यक् सञ्जायते धर्मस्य संरक्षणम्, मानवजन्मनः साफल्यं च सिध्यति ।

यथा दिवसे प्रकाशो भगवता भास्करेण भवति, रात्रौ प्रकाशश्चन्द्रमसा जायते, गृहान्धकारो दीपेनापनीयते, तथैव परमात्मस्वरूपप्रदर्शनार्थं ज्ञानं तु पुराणवचनैरेव

सम्भवितुमर्हति। विविधाभिर्वासनाभिर्भूयो भूयो भवाटव्यामस्यां बंभ्रम्यमाणानां जीवानां कृते पुराणमस्ति सरल आलोकमार्गः। अत एव लोकपितामहेन ब्रह्मणा सर्वासां विद्याना-मादौ पुराणविद्यैव स्मृता—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

( मत्स्यपुराणम् ५३।३ )

सर्वशास्त्राणां ज्ञातृत्वेऽपि पुराणज्ञानाभावाद् विचक्षणत्वं न सम्भवति—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत् पुराणं संविद्यान्नैव स स्याद् विचक्षणः॥

( विष्णुपुराणम् २।५१ )

पद्मपुराणे तु प्रोक्तमस्ति यद् यैर्वेदास्तदितराणि च शास्त्राणि सम्यगधीतानि, परन्तु तैर्यदि पुराणानामध्ययनं न कृतं चेत्, तर्हि तेषामुत्तमज्ञानप्राप्तिर्न जायते—

बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम्।
पुंसोऽश्रुतपुराणस्य न सम्यग् याति दर्शनम्॥

( पद्मपु० ४।१०५।१३ )

धार्मिकसन्देहानां निवृत्तये पुराणानामनुशीलनं नितान्तमस्त्यावश्यकम्। इदं हि विरुद्धैर्हेतुभिर्न हातव्यम्। शास्त्रेषु अप्रतर्क्यपुराण-मानवधर्मशास्त्र-साङ्गवेदचिकित्सासु पुराणस्यैव प्रथमं स्थानं निर्दिष्टमस्ति। तदुक्तं हि महाभारते—

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

पुराणं मानवजातेर्हृदयान्धकारस्यापाकरणाय सर्वथा मणिमयं प्रकाशकमस्ति। परमतत्त्वदृष्टया पुराणं हि नूनमस्ति श्रद्धेयं शास्त्रम्। पुराणेषु विविधैर्भावैर्विभिन्नैर्नामभि-र्विविधेभ्योऽधिकारिभ्यो विविधैः प्रकारैः परमं पुरुषार्थमवगन्तुमुपायाः प्रदर्शिताः सन्ति। अद्यत्वे पुराणानां सम्यगध्ययनाभावादेव तत्र निर्मूला अनेके आक्षेपा भवन्ति। गभीरतया अनुसन्धाने क्रियमाणे तेषामाक्षेपाणामनायासेन निराकरणं जायते। यदि पुराणान्याक्षेप-पूर्णानि स्युः, तर्हि महादार्शनिकानां परमतत्त्वविचारकाणां कुमारिलभट्ट-श्रीशङ्कराचार्य-रामानुजाचार्यप्रभृतिमहानुभवानां निर्भ्रान्तप्रमाणानि पुराणानि कथङ्कारं स्वीकृतानि स्युः?

पुराणानामन्तस्तलं प्रविश्य समीक्षायां स्फुटमवगम्यते यत् पुराणेषु देशकालस्थित्यनुसारं सर्वानुकूलं कर्तव्यमुपदिष्टं वर्तते, येन मानवानां सर्वथा कल्याणमेव जायेत। अतः पुराणपारायणशीलैर्विद्वद्भिर्भारतीयजनताया महत उपकाराय पुराणज्ञानराशिर्नूनं प्रसारणीयः प्रचारणीयश्च।

अद्यत्वे स्वतन्त्रताया उषःकाले नित्यनवीनैरुत्साहैरभिनवव्यतिकरस्य चाक्यचिक्ययुगेऽपि पुराणानि महान्तमुपकारं कर्तुं प्रभवन्ति। भारतीयपथप्रदर्शनाय पुराणानि महाभारतं रामायणञ्च सर्वतोऽधिकं साहाय्यं विधातुं शक्नुवन्ति। यतो हि पुराणादीनां भूमिः समस्तं भूमण्डलं वर्तते, न च केवलं भारतवर्षमात्रम्। पुराणव्यवस्थायां विश्वभ्रातृत्वं निहितमस्ति, येनान्ताराष्ट्रियसमस्यायाः समाधाने पर्याप्तं साहाय्यं भवितुमर्हति।

लौकिकविषयाणामिव पारलौकिकविषयाणामपि पुराणेषु पर्याप्तं विवेचनं विद्यते। यतो हि पुराणानां दृष्टिपथे सर्वोऽपि संसारो विद्यते। अतस्तत्रोर्ध्वाधोभागे वर्तमानानां चतुर्दशभुवनानामपि पदार्थाः सम्यक् तत्र वर्णिताः सन्ति। एवं सर्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां समीक्षा कस्य सचेतसो मानवस्य न प्रियकरी स्यात्?

## शिववायुपुराणयोः पार्थक्यम्

पुराणानां नाम-क्रम-संख्यासम्बन्धे पुराणेष्वेव महान् मतभेदो दृश्यते। विष्णु-पद्म-श्रीमद्भागवत-मार्कण्डेय-ब्रह्मवैवर्त-कूर्म-वाराह-लिङ्ग-स्कन्दपुराणेषु चतुर्थपुराणस्थाने शिवपुराणस्योल्लेखो विद्यते, किन्तु मत्स्य-नारदीय-देवीभागवतेषु शिवपुराणस्य स्थाने चतुर्थवायुपुराणस्य नाम निर्दिष्टमस्ति। एवं तत्तत्पुराणेषु निर्दिष्टपुराणसूच्यनुसारं चतुर्थपुराणरूपेण द्वे पुराणे दृष्टिगोचरीभवतः—एकं शिवपुराणमपरञ्च वायुपुराणम्। मुद्गलपुराणे तूभयोरेव पुराणयोः स्पष्टमुल्लेखो विद्यते। तत्र कतरद् महापुराणं कतरच्चोपपुराणं मन्तव्यमित्यत्र किमस्ति वास्तविकं महापुराणमिति समीक्षा जागर्ति। कियन्तो विद्वांसः शिवपुराणं चतुर्थं महापुराणं स्वीकुर्वन्ति। केचिद् वायुपुराणमेव चतुर्थं महापुराणं मन्यन्ते। कतिपये च समालोचकाः शिवपुराणं वायुपुराणञ्चैकमेव पुराणमङ्गीकुर्वन्ति। तेषां मते शिवपुराणान्तर्गतमेवास्ति वायुपुराणम्, यतो हि शिवपुराणस्य वायवीयसंहिताया वायुप्रोक्तत्वात् तदेव वायुपुराणनाम्ना प्रसिद्धं जातम्। बँगलाविश्वकोशकारेण च द्वयोः पुराणयोर्नाम्ना एकस्यैव शिवपुराणस्य सूची प्रदत्तास्ति, तन्मतेऽपि शिवपुराणस्यैव नामान्तरमस्ति वायुपुराणम्, न तदस्ति भिन्नं पुराणमिति। तथाहि—

यथा शिवस्तथा शैवपुराणं वायुनोदितम् ।
शिवभक्तिसमायोगान्नामद्वयविभूषितम् ॥ इति

तन्न युक्तिसहं प्रमाणपुष्टञ्च 'एसियाटिक सोसायटी'कालिकातातः, आनन्दाश्रम-संस्कृतग्रन्थावलीपूनातः, महामहोपाध्याय-प०पञ्चाननतर्करत्नद्वारा सम्पादित-वङ्गवासी-प्रेससंस्करणतः, गुरुमण्डलग्रन्थमालायां कालिकातातश्च प्रकाशितस्य वायुपुराणस्य विषयसूची वेङ्कटेश्वरप्रेसबम्बईतः पण्डितपुस्तकालयवाराणसीतश्च प्रकाशितस्य शिवपुराणस्य विषयसूचीतः सर्वथास्ति भिन्ना । अतो वायुपुराणं शिवपुराणान्तर्गतमिति स्वीकरणमुभयोरैक्यञ्चेति मतमप्रामाणिकम् । तस्माद् शिवपुराणं वायुपुराणस्य विकल्पाङ्गीकरणमेव युक्तियुक्तं प्रामाणिकञ्च । किञ्च, अरबयात्रिकेण अल्बेरुणिनापि स्वकीये भारतभ्रमणनामके पुस्तके पुराणानां सूचीद्वयं प्रदत्तमस्ति । तत्रैकस्यां सूच्यां वायुपुराणस्योल्लेखो विद्यते, अपरस्यां च वायुपुराणस्य स्थाने शिवपुराणस्य नाम निर्दिष्टमस्ति ।

अपि च, साम्प्रतं शिवपुराणवायुपुराणनाम्ना प्रकाशिते विषयविभेदान्विते हस्त-लिखिते च भिन्ने भिन्ने पुराणे उपलब्धे स्तः । उभयोरपि पुराणयोराकार-प्रकार-वर्ण्य विषया भिन्ना भिन्ना उपलभ्यन्ते । अतस्तयोर्द्वयोः स्वरूपमुपस्थापयितुमत्यावश्यकं मत्वा तयोः स्वरूपं वर्ण्यविषयाश्चाग्रे पृथक् पृथक् प्रदर्श्यन्ते ।

## वायुपुराणस्वरूपनिर्णयः

मत्स्यपुराणानुसारं श्वेतकल्पप्रसङ्गे वायुना यस्मिन् पुराणे धर्मकथाया रुद्रमाहात्म्यस्य च वर्णनं विहितमस्ति, तदेवास्ति वायुपुराणम्, यस्य श्लोकसंख्या चतुर्विंशतिसहस्रात्मिका-विद्यते—

श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
यत्र तद् वायवीयं स्याद् रुद्रमाहात्म्यसंयुतम् ॥
चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते ।

( मत्स्यपुराणम् ५३।१८ )

नारदीयपुराणे वायुपुराणस्यैवमुल्लेखो विद्यते यद् यत्र पुराणे श्वेतकल्पसङ्गतो भग-वतः शिवस्य महिम्नः प्रकाशकाश्चतुर्विंशतिसहस्रश्लोकाः सन्ति, तदस्ति वायुपुराणम्, यस्य श्रवणमात्रेण शिवलोकः प्राप्यते । तत्र भागद्वयमेव विद्यते—पूर्वभाग उत्तरभागश्च ।

श्रृणु विप्र प्रवक्ष्यामि पुराणं वायवीयकम् ।
यस्मिन् श्रुते भवेद्धाम रुद्रस्य परमात्मनः ॥
चतुर्विंशतिसाहस्रं तत् पुराणं प्रकीर्तितम् ।
श्वेतकल्पप्रसङ्गेन धर्मानत्राह मारुतः ॥
तद्वायवीयमुदितं भागद्वयसमाचितम् ।

( नारदीयपुराणम् ९५।१-२½ )

रेवामाहात्म्ये वायुपुराणस्यैवं परिचयः प्रदत्तोऽस्ति यच् चतुर्थं पुराणं वायुपुराणं विद्यते । यत्र शिवमाहात्म्यप्रदर्शकाश्चतुर्विंशतिसहस्राणि श्लोकाः सन्ति । अस्य पूर्वभागे महर्षिणा व्यासेन भगवतः सदाशिवस्य महिमा वर्णितोऽस्ति । उत्तरभागे च नर्मदाया नद्या महत्त्वं प्रदर्शितं विद्यते—

पुराणं यन्मयोक्तं हि चतुर्थं वायुसंज्ञितम् ।
चतुर्विंशतिसाहस्रं शिवमाहात्म्यसंयुतम् ॥
महिमानं शिवस्याह पूर्वे पाराशरः पुरा ।
उत्तरार्द्धे तु रेवाया माहात्म्यमतुलं मुने ॥

( रेवामाहात्म्यम् २७।२-३ )

किन्तु स्वयं वायुपुराणे प्रोक्तमस्ति यच् चतुर्थं महापुराणं लोककल्याणार्थं वायु-प्रोक्तत्वाद् वायुपुराणनाम्ना प्रसिद्धमस्ति । इदं हि चतुर्षु पादेषु विभक्तमस्ति—(१) प्रक्रिया-पादः, (२) अनुषङ्गपादः, (३) उपोद्घातपादः, (४) उपसंहारपादश्च—

प्रक्रिया प्रथमः पादः कथावस्तुपरिग्रहः ।
अनुषङ्ग उपोद्घात उपसंहार एव च ॥
एवमेव चतुष्पादं पुराणं लोकविश्रुतम् ।
उवाच भगवान् साक्षाद् वायुर्लोकहिते रतः ॥

( वायुपुराणम्, उपसंहारपादः १०३।४४-४५ )

एषां चतुर्णां पादानां तुलना चतुर्भिर्वेदैश्च कृतास्ति । एषु चतुर्षु पादेषु श्लोकसंख्या द्वादशसहस्रपरिमिता वर्तते—

एवं द्वादशसाहस्रं पुराणं कवयो विदुः ।
यथा वेदश्चतुष्पादश्चतुष्पादं यथा युगम् ॥

( उपोद्घातपादः ३२।६६ )

## समीक्षा

वायुपुराणस्य रचना प्राचीनास्ति, शैली च समीचीना विद्यते। अस्मिन् पुराण-पञ्चलक्षणानां सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितानां विवरणं स्पष्टं प्रतीयते। अत्र ११२ अध्यायाः सन्ति। तत्र प्रक्रियापादे १-६, उपोद्घातपादे ७-६४, अनुषङ्गपादे ६५-९९, उपसंहारपादे च १००-११२ अध्याया विद्यन्ते। किन्तु अन्तरङ्गपरीक्षया प्रतीयते यदत्र १०३ योऽध्याय एवास्त्यन्तिमोऽध्यायः। यतोऽत्रान्तिमे भागे वायुपुराणस्यावतरणं पुराण-गुरुपरम्परा च प्रामाणिकरूपेण निबद्धास्ति। ततः फलश्रुतेरुल्लेखं विधायोपसंहारः कृतोऽस्ति। तदनन्तरं गयामाहात्म्यद्योतका अध्यायाः सन्ति। अतः प्रतीयते यत् १०४-११२ अध्यायाः केनचिद् वैष्णवलेखकेन वैष्णवमतपुष्ट्यर्थं योजिताः सन्ति। १०४ अध्याये कोटिकन्दर्प-दर्पदलनप्रवीणस्य सकलकामकलापूर्णस्य राधाविलासरसिकस्य गोलोकवासिनो भगवतः श्रीकृष्णस्य सरसं वर्णनं विद्यते, तथा १०५-११२ अध्यायेषु विस्तरशो गयातीर्थस्य माहात्म्यं श्राद्धसम्बन्धिनो विषयाश्च वर्णिताः सन्ति। अस्य पुराणस्य प्रथमाध्यायस्थायां पुराणानुक्रमणिकायां गयामाहात्म्यानुल्लेखः, अन्ते नवानामध्यायानां वैष्णवमतसम्बद्धतार्थं केनचित् प्रक्षिप्तत्वं द्योतयति।

## वायुपुराणस्य वर्ण्यविषयाः

आरम्भेऽनुक्रमणिकावर्णनानन्तरम् ऋषीणां पुराणविषयकः प्रश्नः, पुराणकथानुक्रमः, द्वादशवार्षिकसत्रनिरूपणम्, ससंख्याकपुराणगणना, व्याससंशयापनोदनम्, प्रजापतिसृष्टि-प्रक्रियाया ब्रह्माण्डस्योत्पत्तिप्रलययोर्विवेचनं युक्तियुक्तेन प्रकारेण कृतं विद्यते। तत्र तर्कस्य कल्पनायाश्च प्रचुरः प्रश्रयो दत्तो विद्यते। वाराहोत्पत्ति-पृथिवीसन्निवेश-आश्रमविभाग-मन्वन्तरप्रसङ्ग-योगनिरूपण-शौचाचाराणां च प्रदर्शनानि दर्शनीयानि सन्ति। २१-२२ अध्याययोः कल्पनिरूपणं तथा २४ अध्याये विष्णुना कृतं शिवस्तवनं महत्त्वपूर्णमस्ति। ३० अध्याये सतीशरीरत्यागप्रसङ्गे दक्षप्रजापतिद्वारा कृता शिवस्तुतिः साहित्यिकदृष्ट्या अत्यन्तं स्पृहणीयास्ति। पुराणमिदं भौगोलिकज्ञानायात्यन्तमुपयोगि सिध्यति। ३४-५० अध्यायेषु सरित्-समुद्र-लोक-द्वीप-वन-पर्वत-नद-नदीप्रभृतीनां समीक्षात्मकं वर्णनमुपलभ्यते। ६०-६१ अध्याययोर्वेदशाखाविवरणं धार्मिकदृष्ट्यानुशीलनयोग्यं विद्यते। ६२-६९ अध्यायेषु कश्यपवंश-ऋषिवंशयोर्विवरणमैतिहासिकदृष्ट्या महत्त्वपूर्णं वर्तते। ८६-८७ अध्याययोः संगीतशास्त्रस्य स्वर-राग-मूर्च्छना-तालालङ्कारादीनां सामान्यपरिचयः संगीतप्रियाणां कृतेऽत्यन्तं

मनोहरो विद्यते। ८८-८९ अध्यायेषु प्राचीन-भविष्यद्राजवंशादीनां प्रामाणिकमितिहास-प्रदर्शनमैतिहासिकदृष्ट्या महत्त्वाधायकं वर्तते। १०० अध्याये मन्वन्तर-प्रलययोर्निरूपणं दर्शनीयतरं विद्यते। १०३ अध्याये सृष्टिवर्णनं पुराणगुरुपरम्परावर्णनञ्चास्ते। १०४ अध्याये राधासंवलितस्य भगवतः श्रीकृष्णस्य महत्त्वं प्रदर्शितं वर्तते। १०५-११२ अध्यायेषु गयातीर्थश्राद्धादीनां माहात्म्यस्य सविस्तरं वर्णनमस्ति। यो हि श्राद्धशीलानां मानवानां परमोपयोगी वर्तते। एवं वायुपुराणे ईश्वरस्वरूप-पृथिवीसन्निवेश-शौचाचार-मन्वन्तर-कल्प-भेद-विविधसर्ग-प्रतिसर्ग-भुवनविन्यास-राजर्षि-महर्षि-देवर्षिवंशनिरूपण-तीर्थ-व्रत-पितृयान-गुरु-भक्ति-भूगोल-खगोल-भक्ति-ज्ञान-वैराग्य-पितरश्राद्धादीनां साङ्गोपाङ्गं वर्णनं विद्यते। तथा समस्तानामुपयोगिनां विषयाणां सम्यग् विवेचनं विद्यते।

अस्य पुराणस्य सर्वतो वैशिष्ट्यमिदमास्ते यद् भगवतो भूतभावनस्य भवानीपतेः शिवस्य पवित्रं चरित्रं चारु चर्चितमस्ति। अथापि पुराणमिदं साम्प्रदायिकदृष्ट्या दूषितं न वर्तते। अत्र विष्णोरपि रुचिरं चरित्रं वर्णितमस्ति, तदवतारस्य च साटोपं विवरणमुपस्थापितं विद्यते। एवं शैवं पुराणं सदपि वायुपुराणं विष्णुमाहात्म्यं वर्णयित्वा आत्मनः पक्षपात-हीनतायाः परिचयं ददाति। तथा च पुराणेषु वायुपुराणस्यैतिहासिकदृष्ट्या, सामाजिक-दृष्ट्या, धार्मिकदृष्ट्या भौगोलिकदृष्ट्या चैकं विशिष्टं स्थानमस्तीति नास्ति काचित् संशीतिः।

## वायुपुराणे विकासवादः

भारतीयसंस्कृतिविकासविषये वायुपुराणमप्याधुनिका इव स्वकीयं तर्कसंगतं मतमुपस्थापयति। वायुपुराणानुसारं मनुष्याः प्रथमं वनवासिन आसन्; तदनन्तरं तैर्ग्रामीणं नागरिकं च जीवनमारब्धम्। सर्वप्रथमं ते पशुवत् शीतोष्णसहनशीला आसन्, किन्तु कालान्तरे तेषां बुद्धेर्विकासो जातः। तदनु ते शीतोष्णाभ्यामात्मनो रक्षितुमुपायं विचिन्त्य शनैः शनैः स्वाङ्गाच्छादनाय शरीररक्षायै च वस्त्राणामाविष्कारं कृतवन्तः। पूर्वं ते गृहं निर्मातुं न जानन्ति स्म। गृहहीनाः सन्तो वृक्षाणामधस्तले निवसन्तः स्वेच्छया आहारं विहारं च कुर्वन्तः समयं यापयन्ति स्म। ततो गृहिणः सदाचारप्रियाश्च जाताः। प्रथमं ते लघुगृहं पर्वतेषु नदनदीतटेषु निर्मातुमारब्धवन्तः, यत्र तेषां प्राकृतिकी सुखसामग्री समुपलब्धा आसीत्। पश्चात्ते शनैः शनैर्ग्राम-खर्वट-पुर-नगरादिनिर्माणे समर्था अभूवन् (८।९५-९६)।

## वायुपुराणस्य परम्परा

समस्तपापापहारकं पुण्यप्रदं यशोदायकं वायुपुराणं सर्वप्रथमं लोकपितामहेन ब्रह्मणा मातरिश्वने उपदिष्टम्, तेनेन्द्राय समुपदिष्टम्, तेन वसिष्ठाय प्रदत्तम्, तेन सारस्वताय,

तेन त्रिधाम्ने, तेन शारद्वताय तेन च त्रिविष्टपाय समुपदिष्टम् । सोऽन्तरिक्षाय दत्तवान्, स च वर्षिणे, तेन त्र्य्यारुणाय दत्तम् । ततो धनञ्जयेन लब्धम्, ततः कृतञ्जयेन प्राप्तम् । ततो भरद्वाजो लब्धवान्, ततो गौतमः, ततो निर्यन्ता, ततो वाजश्रवाः, ततः सोमसुष्मा, ततस्तृणबिन्दुः, ततो लब्धवान् दक्षः, ततः शक्तिः, ततः पराशरः श्रुतवान्, ततो जातुकर्णः, ततः कृष्णद्वैपायनः, ततो लोमहर्षणिः सूतः प्राप्तवान् । स च नैमिषारण्ये शौनकादिभ्य ऋषिभ्यः प्रोक्तवान्, तदनन्तर परम्परयाऽद्यत्वेऽस्माकं श्रुतिपथं पथिकायते ( १०३।५८-६६ ) ।

## वायोर्महत्त्वम्

वायुपुराणस्य महत्त्वविषये लिखितमस्ति यत् प्राचीनकालेऽस्य महती प्रतिष्ठासीत् । अत एवैतत् पुराणं कथ्यते । य एनां पुराणनिरुक्तितात्पर्यं वेत्ति स समस्तपापेभ्यो विमुक्तो भवति । यश्चैनं श्रेष्ठतरं पुराणं श्रुत्वा धर्मे प्रवर्तते स स्वशरीरस्थरोमकूपसमसंख्याककोटि-वर्षाणि स्वर्गे आनन्दमनुभवति—

यस्मात् पुरा ह्यनतीदं पुराणं तेन चोच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥
यावन्त्यस्य शरीरेषु रोमकूपाणि सर्वशः ।
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ॥

( उपसंहारपादे ५५-५७ )

## वायुपुराणस्य कालनिर्णयः

श्राद्धं हि हिन्दुधर्मस्यास्त्येकमनिवार्यमङ्गम् । अतो मत्स्यपुराणवद् वायुपुराणेऽपि धर्मशास्त्रीयविषयाणां बाहुल्यं विद्यते । काणेमहोदयस्य कथनानुसारं कल्पतरुकारेण वायुपुराणस्य श्राद्धसम्बन्धिनः १६०, मोक्षविषयकाः २२, तीर्थमहत्त्वाधायकाः ७, ब्रह्मचर्य-पोषकाः ५, गृहस्थोपयोगिनश्च ५ श्लोकाः समुद्धृताः सन्ति । एवं वायुपुराणतोऽपरार्केण ७५, स्मृतिचन्द्रिकाकारेण च २५ पद्यानि श्राद्धप्रतिपादकानि गृहीतानि । अपि च वायुपुराणे भविष्यराजवंशनिरूपणप्रसङ्गे गुप्तसाम्राज्यस्यारम्भिकसीमोल्लेखो वर्तते—

अनुगङ्गं प्रयागं च साकेतं मागधं तथा ।
एतान् जानपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ॥

( वा० पु०, अनुषङ्गपादे ९९।३८३ )

वायुपुराणं भारतीयजीवनस्य संस्कृतेश्च मूलाधारोऽस्ति। अस्य शैली अपि प्राचीनतायाः साक्ष्यं प्रददाति। अन्यपुराणवदत्र भावुकतायाः प्राधान्यं नास्ति, अपि त्वत्र तर्कस्य प्रचुरं प्राधान्यं विद्यते। अस्य पुराणस्य वर्णनशैल्यां वेदकालतो बौद्धकालपर्यन्तं भारतीयराजनीतिकोत्कर्षस्य गौरवपूर्णमुल्लासो निहितोऽस्ति। अत्र राजवंशवर्णनप्रसङ्गे शांशपायनेन स्वसमकालीनस्य राज्ञोऽधिसामकृष्णस्योल्लेखः कृतोऽस्ति। यः परीक्षितपुत्रस्य जनमेजयस्य पौत्र आसीत्—

अधिसामकृष्णो धर्मात्मा साम्प्रतोऽयं महायशाः।
यस्मिन् प्रशासति महीं युष्माभिरिदमाहृतम्॥

(वा० पु० ९९।२५८)

अस्य समयो महाभारतयुद्धात् शतद्वयवर्षात् परं स्वीक्रियते। एतदनुसारं वायुपुराणस्य कालो महाभारतानन्तरं शतद्वयवर्षात् परमङ्गीकर्तुं युक्तं प्रतिभाति। महाकविना बाणभट्टेन स्वकीये हर्षचरिते कादम्बर्यां च वायुपुराणस्य चर्चा कृतास्ति। अतो विवेकदृष्ट्या विचारे क्रियमाणे ३५०-५५० मध्ये चतुर्थशताब्द्यां वायुपुराणस्य रचनाकालनिर्णयः संगतः प्रतीयते।

## शिवपुराणस्य स्वरूपम्

शिवपुराणस्योमासंहितायां लिखितमस्ति यद् यस्य पुराणस्य पूर्वोत्तरखण्डे च भगवतः शिवस्य पवित्रं चरित्रं विविधैः प्रकारैर्वर्णितमस्ति, तत् पुराणं पुराणमर्मज्ञा विद्वांसः शिवपुराणं कथयन्ति—

यत्र पूर्वोत्तरे खण्डे शिवस्य चरितं बहु।
शैवमेतत् पुराणं हि पुराणज्ञा वदन्ति च॥

(४४।१२५)

शिवपुराणं हि सप्तसु संहितासु विभक्तमस्ति। तद्यथा—(१) विद्येश्वरसंहिता, (२) रुद्रसंहिता, (३) शतरुद्रसंहिता, (४) कोटिरुद्रसंहिता, (५) उमासंहिता, (६) कैलाससंहिता, (७) वायवीयसंहिता च—

विद्येश्वराख्या तत्राद्या द्वितीया रुद्रसंहिता।
तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका॥

पञ्चमी कथिता चोमा षष्ठी कैलाससंहिता ।
सप्तमी वायवीयाख्या सप्तैव संहिता इह ॥
( शिवपुराणे, वा० सं० पू० १।५९,६० )

तत्रापि द्वितीयायां रुद्रसंहितायां सृष्टिखण्ड-सतीखण्ड-पार्वतीखण्ड-कुमारखण्ड-युद्ध-खण्डनामानि पञ्च खण्डानि सन्ति । सप्तम्यां वायवीयसंहितायामपि द्वौ भागौ स्तः—पूर्वार्द्ध-मुत्तरार्द्धञ्च । सप्तस्वासु संहितासु क्रमशः २५,१९७ (२०+४३+५५+२०+५९=१९७) ४२, ४३, ५१, २३, ७६ ( ३५+४१=७६ ) सङ्कलनया ४५७ अध्यायाः सन्ति ।

शिवपुराणस्य वायवीयसंहितायाः पूर्वार्द्धे द्वादशसंहितात्मकस्यापरस्यैकस्य शिवपुराण-स्यापि सङ्केतोऽस्ति । यत्र लक्षसंख्याकाः श्लोकाः सन्ति । तस्य विवरणमित्थमस्ति—

तत्र शैवं तुरीयं यच्छार्वं सर्वार्थसाधकम् ।
ग्रन्थो लक्षप्रमाणं तद् व्यस्तं द्वादशसंहितम् ॥
विघ्नेश्वरं तथा रौद्रं वैनायकमनुत्तमम् ।
औमं मातृपुराणं च रुद्रैकादशकं तथा ॥
कैलास-शतरुद्रं च कोटिरुद्राख्यमेव च ।
सहस्रकोटिरुद्राख्यं वायवीयमतः परम् ॥
धर्मसंज्ञं पुराणं चेत्येवं द्वादश संहिताः ॥
( ७।१।४५, ५०–५२ )

साम्प्रतं द्वादशसंहितात्मकं शिवपुराणं नोपलभ्यते । परं भगवता व्यासदेवेन तत एव संक्षिप्तीकृतं सप्तसंहितात्मकं चतुर्विंशतिसहस्रश्लोकं शिवपुराणमुपलभ्यत एव, तथा चोक्तम्—

व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम् ।
शैवं तत्र पुराणं वै चतुर्थं सप्तसंहितम् ॥
( शिवपुराणे वा० सं० पू० १।५८ )

## शिवपुराणस्य वर्ण्यविषयाः

भगवतः शिवस्य महत्त्व-सात्त्विकचरित्रेतिहास-विविधकथानां विशदतया वर्णनं शिवपुराणस्यास्ति वैशिष्ट्यम् । अत्र शिवसम्बन्धिनां व्रतोपवास-पूजापद्धति-तपस्या-योगसाधना-दीनां वर्णनं महदुत्कृष्टं विद्यते । प्रसङ्गतो ब्रह्माण्ड-भारतवर्षद्वीप-ग्रहस्थिति-कश्यपपत्नीना-मपत्यवर्णनमिक्ष्वाकुवंश-मनुवंशवर्णनं च मनोहरं विद्यते ।

अत्र सप्तसंहिताः सन्ति। तत्र—(१) आद्यायां विद्येश्वरसंहितायां शिवलिङ्गस्यार्चनान्मुक्तिप्राप्तिः, तथा विविधप्रकारैः पुष्पैर्बिल्वपत्रैश्च पूजने फलवर्णनं भस्मरुद्राक्षधारणमहत्त्वञ्चातिस्पृहणीयमस्ति। (२) द्वितीयायां रुद्रसंहितायां सतीखण्डे दक्षप्रजापतेः पुत्र्या भगवत्याः सत्याः पावनं चरित्रम् ४३ अध्यायेषु वर्णितमस्ति। यत्र सीतारूपं धृत्वा सतीद्वारा सीतावियुक्तस्य श्रीरामचन्द्रस्य परीक्षाया मार्मिकः प्रसङ्गो वर्णितोऽस्ति। यस्याधारेण गोस्वामिना तुलसीदासेनात्मीये रामचरितमानसे मार्मिकं वर्णनं कृतमस्ति। योगाग्निना सतीशरीरत्यागेन पवित्रपातिव्रत्यधर्मस्याद्भुतमुदाहरणं प्रस्तुतं वर्तते।

पार्वतीखण्डे २२-२३ अध्यायेषु पर्वतराजस्य हिमालयस्य भार्यायां मेनायां द्वितीये जन्मनि पार्वतीनाम्ना प्रसिद्धायास्तस्याः पूर्वं पतिं भगवन्तं शिवं पतिरूपेण पुनः प्राप्तुं घोरतपश्चर्यानुष्ठानसमये कामदहनं, परीक्षायै जटिलब्रह्मचारिवेषेण शिवेन सह भगवत्याः पार्वत्याः संवादोऽत्यन्तं रुचिकरो विद्यते। यस्य शब्दतोऽर्थतश्च कुमारसम्भवे महाकाव्ये स्पष्टतरः प्रभावः परिलक्ष्यते। तयोस्तुलनायां प्रतीयते यत् कविकुलकलाधरेण महाकविना कालिदासेन तस्यैवाधारेण स्वकीयं महाकाव्यं कुमारसम्भवं विरचितम्। यथा—

त्वं स्त्रीरत्नं तव पिता राजा निखिलभूभृताम्।
तथाविधं पतिं कस्मादुग्रेण तपसेहसे॥
( शि० पु०, पा० ख० २७।२० )

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत्॥
( कु० सं० ५।४५ )

वरेषु ये गुणाः प्रोक्ता नारीणां सुखदायकाः।
तन्मध्ये हि विरूपाक्षे एकोऽपि न गुणः स्मृतः॥
( शि० पु०, पा० ख० २७।३२ )

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥
( कु० सं० ५।७२ )

वारणीयः प्रयत्नेन सख्ययं हि द्विजाधमः।
पुनर्वक्तुमनाश्चैव शिवनिन्दां करिष्यति॥

न केवलं भवेत् पापं निन्दां कर्तुः शिवस्य च ।
यो वै शृणोति तन्निन्दां पापभाक् स भवेदिह ॥
( शि० पु०, पा० ख० २८।३६-३७ )

निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतेऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥
( कु० सं० ५।८३ )

अद्यप्रभृति ते दासस्तपोभिः कृत एव ते ।
क्रीतोऽस्मि तव सौन्दर्यात् क्षणमेकं युगायते ॥
सर्वः श्रमो विनष्टोऽभूत् सत्यास्तु मुनिसत्तम ।
फले जाते श्रमः पूर्वो जन्तोर्नाशमवाप्नुयात् ॥
( शि० पु०, पा० ख० २८।४४-५० )

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥
( कु० सं० ५।८६ )

(३) तृतीयायां शतरुद्रसंहितायाम् ४२ अध्यायेषु द्वादशज्योतिर्लिङ्गानां विस्तृतं विवरणं प्रदत्तमस्ति । एवम् ३७-४१ अध्यायेषु महर्षेर्व्यासस्योपदेशेन 'इन्द्रकील'पर्वते तपस्यतेऽर्जुनाय पाशुपतास्त्रप्रदानप्रसङ्गे किरातवेषं विधायोपस्थितेन शिवेन सहार्जुनस्य युद्धञ्चातिमनोहरं चित्रितमस्ति । मन्ये, तदाशयमेव गृहीत्वा महाकविना भारविणापि स्वमहाकाव्यं किरातार्जुनीयं निर्मितम् । अत्रापि शब्दतोऽर्थतश्च साम्यमाश्चर्यकरं विद्यते । (४) चतुर्थ्यां कोटिरुद्रसंहितायां काशीस्थानां शिवलिङ्गानां नामानुकीर्तनपूर्वकं माहात्म्यवर्णनम्, अनसूयात्रितपोवर्णनं महन्महत्त्वाधायकमस्ति । (५) पञ्चम्यामुमासंहितायां पुत्रार्थं श्रीकृष्णस्य तपश्चर्या, नरकपातालवर्णनम्, स्वायम्भुवादिमनुवंशवर्णनं देवीचरितप्रसङ्गे सुरथ-वैश्ययोश्चरित्रचित्रणञ्च स्वाभाविकमस्ति । (६) षष्ठ्यां कैलाससंहितायाम् १६-१७ अध्याययोः प्रत्यभिज्ञादर्शनस्य सिद्धान्तानां विस्तृतं विवेचनं विद्यते । तथा वसुगुप्तद्वारा प्राप्तस्य शिवसूत्रस्य तत्सम्बद्धभास्करप्रणीतवार्त्तिकानां च निर्देशो दृश्यते । शिवसूत्रं हि प्रत्यभिज्ञादर्शनस्यादिग्रन्थोऽस्ति, यत्र भास्करेणाभिनवगुप्तप्रधानशिष्यस्य क्षेमराजस्य शिवसूत्रवृत्तिमाधारीकृत्य शिवसूत्रवार्त्तिकस्य प्रणयनं कृतम् ।

शिवसूत्रस्योपलब्धिसम्बन्धे काश्मीरीयशैवाचार्याणां परम्परायामेवं प्रसिद्धिरस्ति यद् भगवता शिवेन स्वप्ने प्रदत्तादेशानुसारं वसुगुप्तेन महादेवगिरिशिखरप्रस्तरेऽङ्कितेषु त्रिषून्मेषेषु विभक्तानि ७७ सूत्राणि प्राप्तानि। तत्प्रस्तरमद्यत्वेऽपि शङ्करोपलनाम्ना प्रसिद्धतरं विद्यते। **'चैतन्यमात्मा'** शिवसूत्रस्य प्रथमं सूत्रमस्ति, द्वितीयञ्च सूत्रं **'ज्ञानं बन्धः'** इति विद्यते। अनयोर्द्वयोः सूत्रयोर्निर्देशः, तथा तत्र निर्मितयोर्वार्त्तिकयोरप्युल्लेखः शिवपुराणे एवमुपलभ्यते—

चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्तितम्।
चैतन्यमिति विश्वस्य सर्वज्ञानक्रियात्मकम्॥
स्वातन्त्र्यं तत्स्वभावो यः स आत्मा परिकीर्तितः।
इत्यादिशिवसूत्राणां वार्त्तिकं कथितं मया।
ज्ञानं बन्ध इतीदं तु द्वितीयं सूत्रमीशितुः॥

(कै० सं० १६।४४-४६)

एवं सप्तम्यां वायवीयसंहितायां शैवतन्त्रसम्बद्धाया उपासनापद्धतेर्विशदं विवेचनं विद्यते। शैवागमसिद्धान्तानां निरूपणं शैवतान्त्रिकाणां मनसो विनोदाय परमं साधनमुपयोगि च वर्तते।

एवं शिवपुराणे तान्त्रिकतायाः पूर्णः प्रभावो लक्ष्यते। शिवस्य प्रतियुगं शिवावतारवर्णनम्, शैवावरणपूजायाः क्रमः, पञ्चाक्षरमन्त्रजपविधिः, सपरिकरशिवलिङ्गप्रतिष्ठाविधानम्, शैवागमोक्तायाः पूजापद्धतेश्च विवेचनं सम्यगस्ति। ऋषिभ्यः शैवं ज्ञानं दत्त्वा शिवसन्निधिगमनादिवर्णनं शिवभक्तानां महानुल्लासकरो विद्यते।

## शिवपुराणस्य समयः

भास्करप्रणीतशिवसूत्रवार्त्तिकयोरुद्धरणात्, अल्बेरुणिना सङ्केतितायां पुराणसूच्यां शिवपुराणस्य नामनिर्देशात्, तान्त्रिकयुगस्य प्रभावाच्च शिवपुराणस्य समयो दशमशताब्दीति निर्णयो न्यायसंगतस्तर्कसम्मतश्च प्रतिभाति।

## महापुराणत्वसमीक्षा

चतुर्थमहापुराणस्य निर्णयार्थं विभिन्नेषु पुराणेषु प्रदत्ते लक्षणे विषयानुक्रमणिकायाञ्च ध्याने दीयमाने प्रतीयते यद् नारदीयपुराणानुसारं चतुर्थे पुराणे रुद्रमहिमप्रतिपादकाः चतुर्विंशतिसहस्रश्लोकाः श्वेतकल्पप्रसंगेन वायुप्रोक्ताः सन्ति। पुराणस्यास्यास्ति भागद्वयम्—

पूर्वभाग उत्तरभागश्च। तत्रादौ सर्गानामुल्लेखः, गयासुरवधप्रसंगः, व्रतदानराजधर्मपृथिव्याकाश-पातालादीनां च विद्यते विवरणम्। तथोत्तरभागे विशेषतया नर्मदानद्या वर्णनं भगवतः शिवस्य चौत्कृष्ट्यं वर्णितमास्ते।

रेवामाहात्म्यानुसारं चतुर्थे महापुराणे शिवस्य महत्त्वप्रतिपादकाश्चतुर्विंशतिसहस्रश्लोका भवितुमर्हन्ति। एवं तस्य पूर्वभागे भगवतः सदाशिवस्य महिमा प्रदर्शितो विद्यते। तदुत्तरभागे च नर्मदानद्या माहात्म्यमुपदिष्टं वर्तते। मत्स्यपुराणानुसारं तदस्ति चतुर्थं पुराणम्, यत्र वायुना श्वेतकल्पप्रसंगतश्चतुर्विंशतिसहस्रश्लोकद्वारा भगवतः शिवस्य महत्त्वं प्रदर्शितमस्ति।

अत्रेदं समीक्षणीयं विद्यते यदिमानि चतुर्थपुराणलक्षणानि कस्मिन् पुराणे संघटन्ते, वायुपुराणे उत शिवपुराणे? वस्तुतो लक्षणानामेषां शिवपुराणे समन्वयो न सम्भवति, यतो हि वायुद्वारा केवलं तदन्तिमायाः सप्तम्या वायवीयसंहिताया एव प्रवचनं जातमस्ति, न तु सम्पूर्णस्य शिवपुराणस्य वायुप्रोक्तत्वं विद्यते। अपि च शिवपुराणे वायवीयसंहितायां पूर्वार्द्धोत्तरार्द्धभागद्वयस्य विद्यमानत्वेऽपि तस्य श्लोकसंख्या केवलं चतुःसहस्रात्मिकैवास्ते। किञ्च, पूर्वार्द्धे न गयासुरवधस्य प्रसंगोऽस्ति, न वोत्तरार्द्धे नर्मदानद्या माहात्म्यं संकेतितमस्ति।

सम्पूर्णे शिवपुराणे श्लोकास्तु चतुर्विंशतिसहस्राणि सन्ति, किन्तु तत्र केवलं पूर्वोत्तरभागद्वयमेव नास्ति, अपि तु तत्र सन्ति सप्त संहिताः, तत्राप्यनेकेऽवान्तरभेदा वर्तन्ते। एवं स्थितौ शिवपुराणं चतुर्थं महापुराणमिति वक्तुं न युक्तम्, यतो हि पूर्वोक्तानां चतुर्थपुराणस्य वैशिष्ट्यानां तत्रास्ति सर्वथाभावः।

यद्यपि वायुपुराणस्य वक्ता वायुरस्ति, तत्र शिवस्य महिमा विशदतया च वर्णितो विद्यते, तथाप्यद्यत्वे तत्र भागद्वयं नास्ति, अपि तु तत्र सन्ति चत्वारः पादाः, परन्तु प्राचीनेषु हस्तलेखेषु भागद्वयमेवोपलभ्यते। ३५६६ सङ्ख्याकस्य अब्यारलायब्रेरी-पूनात उपलब्धस्य वायुपुराणस्य पुष्पिकायां लिखितमस्ति—"इति श्रीमहापुराणे वायुप्रोक्ते द्वादशसाहस्रयां संहितायां ब्रह्माण्डावर्तं समाप्तम्। समाप्तञ्च वायुपुराणपूर्वार्द्धम्। अतः परं रेवामाहात्म्यं भविष्यति।"

डॉ० पुसालकरमहोदयस्य कथनानुसारम् ३५९९ सङ्ख्याके आंग्लहस्तलेखे वायुपुराणान्तर्गतायाः कस्याश्चिद् लक्ष्मीसंहिताया अप्युल्लेखो विद्यते। सम्भवत एवं वायुपुराणसम्बद्धा अन्या अपि संहिताः स्युः, याः साम्प्रतं वायुपुराणतः पृथग्भूता जाताः। अतोऽद्यत्वे वायुपुराणस्य श्लोकेषु न्यूनता समागता।

नारदीयपुराणानुसारं गयामाहात्म्यं हि पूर्वभागे उपलब्धुमुचितमासीत्, परमिदानीमुत्तरभागस्यान्तिमे भागे तदुपलभ्यते। इत्थं वायुपुराणेऽपि चतुर्थमहापुराणस्य सर्वाणि लक्षणानि न सर्वथा सङ्गतानि भवन्ति, किन्त्वधिकांशस्य सङ्गतिस्तु जायत एव।

अपि च शिवपुराणमर्वाचीनं साम्प्रदायिकसिद्धान्तैः परिचितमस्ति। तथा तत्र तन्त्रस्य पूर्णः प्रभावो लक्ष्यते, शैवागमसिद्धान्तसनाथञ्च दृश्यते, किन्तु वायुपुराणं तान्त्रिकप्रभावरहितम्, सम्प्रदायसङ्कीर्णतावर्जितम्, साम्प्रतिकप्रभावातिरिक्तं प्राचीनञ्च प्रतीयते। श्रीस्वामिवर्यशङ्कराचार्यात् पूर्ववर्तिना षष्ठशताब्द्यां वर्तमानेन गद्यमहाकाव्यप्रणेत्रा महाकविना बाणभट्टेन स्वकीयकादम्बर्यां जाबालेराश्रमवर्णनप्रसङ्गे 'पुराणेषु वायुप्रलपितम्' इत्युक्त्वा वायुपुराणस्य सत्ता तु स्वीक्रियत एव। महाभारतस्य वनपर्वणि ऋषिभिः संस्तुतस्य वायुपुराणस्य स्पष्टमुल्लेखो विद्यते, यत्र भूत-भविष्यच्चरितानां चर्चा कृतास्ति—

एतत्ते सर्वमाख्यातमतीतानागतं मया।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसत्तम॥

(१९१। १६)

अस्मिन् पद्येऽतीतानागतस्य पदस्य तात्पर्यं तै राजवंशैः सहास्ते, ये कलेः पूर्वमासन्, भविष्ये च भविष्यन्ति। वायुपुराणे राजवंशावली विस्तृतरूपेण विद्यते, किन्तु शिवपुराणेऽस्य निर्देशो नास्ति। एवं वायुपुराणे सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितानां वर्णनद्वारा पुराणपञ्चलक्षणस्य समन्वयस्तु स्पष्टतया जायते, किन्तु शिवपुराणे केवलं सर्गमात्रस्यैवास्ति चर्चा। वायुपुराणे स्थले स्थले राज्ञाम्, ऋषीणाम्, राजवंशावल्या वंशानुचरितस्य च स्पष्टतरमुल्लेखो विद्यते। शिवपुराणे शिवसम्बन्धिनीनां कथानां चरित्र-पूजापद्धति-दीक्षानुष्ठानतपश्चर्यादीनां विशालं वर्णनं विद्यते। शैवतन्त्रे शैवदर्शनसिद्धान्तविवरणे च तान्त्रिकप्रभावस्य पर्याप्तमात्रा विद्यते। अतः शिवपुराणस्येदं स्वरूपं वायुपुराणस्वरूपतः सर्वथास्ति भिन्नम्। अतो द्वे अपि पुराणे स्त इत्यत्र न कश्चनास्ति सन्देहः।

एवमुभयोः पुराणयोः सम्यक् समीक्षायामिदमेव निश्चेतुं शक्यते यत् शिवपुराणापेक्षया वायुपुराणं प्राचीनम्, अधिकं संयतं पुराणलक्षणलक्षितं च विद्यते। अतो वायुपुराणं चतुर्थं महापुराणं शिवपुराणञ्चोपपुराणमित्यङ्गीकरणं न्यायसङ्गतम्, तर्कप्रतिष्ठितम्, युक्तियुक्तं शास्त्रसम्मतञ्च प्रतीयते।

केचन विचारकाः कथयन्ति यदिमे द्वे अपि पुराणे कल्पभेदाद् महापुराणे स्तः। यतो हि प्रतिद्वापरं पुराणानां विभागो जायते। कस्मिंश्चिद् द्वापरे शिवपुराणं महापुराणमभिमतमस्ति, कस्मिंश्चिद् द्वापरे वायुपुराणमेव महापुराणं गण्यते। अतः श्रीमद्भागवतदेवीभागवतयोरिव तयोरपि महापुराणत्वं मतान्तरेणाङ्गीकार्यमिति सुधीभिर्विभावनीयम्।



# आयुर्वेदस्य पारम्पर्योपदेशः[1]

श्री विद्याधरशुक्लः, जी० ए० एम० एस०, आयुर्वेदाचार्यः, एम० ए०, काव्यतीर्थः
प्रवाचकः—आयुर्वेदविभागे, वा० सं० वि० वि०।

निखिलप्राणिपीडाप्रतीकारपरायणेन, विश्वानि भूतानि परिपालयितुकामेन, विदिताखिलवेदितवेदितव्येन विधात्रा प्रागेव सृष्टेः, धर्मार्थकाममूलम्, सर्वविधाभ्युदयनिःश्रेयससाधनम्, समस्तप्राणिप्राणयात्राकरमायुर्वेदशास्त्रं लक्षश्लोकमय्यामध्यायसहस्रमय्याम् 'ब्रह्मसंहितायाम् सन्निबद्धमिति प्रतियन्ति, पूर्वे परावरदृशः सुश्रुताचार्यप्रभृतयो महर्षयः।

"अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः";

"स्वयम्भुवा प्रोक्तमिदं सनातनम्"—( सुश्रुत०, सूत्र० अ० १ )

सर्वविधेषु ज्ञानेषु ब्रह्मणोऽव्याहतबुद्धिप्रसरत्वादासीदस्यायुर्वेदार्थावबोध इति मत्वा चाह पुनर्वसुः—

"त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः।"

( चरकसूत्र०, अ० १ )

हेतु-लिङ्ग-औषधज्ञानं त्रिसूत्रमित्युच्यते, 'शाश्वतम्' इति पदेनायुर्वेदशास्त्रस्याविनाशित्वं नित्यत्वञ्च प्रतिपादितं भवति—

"सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादित्वात्, स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च। नहि 'नाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा शाश्वतश्चायुषो वेदिता' अनादि च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात्।"

( चरकसूत्र०, अ० ३० )

"तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरं च।"

( सुश्रुतसू०, अ० १ )

भगवता काश्यपेन च ब्रह्मणैवायुर्वेदो प्राकाश्यं नीत इति समाख्यातम्—

---

१. परम्परया आगतः। "तत आगतः" (४।३।७४) इत्यण्। "चतुर्वर्णादित्वात्" (५।१।१२४) इति ष्यञ्। "पारम्पर्यश्चासावुपदेशश्च"—( अमरकोषः, रामाश्रमीटीका २।७।१२ )।

"स्वयम्भूर्ब्रह्मा प्रजाः सिसृक्षुः प्रजानां परिपालनार्थमायुर्वेदमेवाग्रेऽसृजत् सर्ववित्, ततो विश्वानि भूतानि।" (काश्यप० विमान०)

एभिश्च सन्दर्भैरायुर्वेदशास्त्रस्य प्राथम्येनोपदेशे 'ब्रह्मा'[1] एव विश्रुतत्वेनोपलभ्यते।

## आयुर्वेदस्य सम्प्रदायपरम्परा

साम्प्रतमुपलभ्यमानासु संहितासु निम्नाङ्कितरूपेणोपदेशपरम्परा दरीदृश्यते—

"ब्रह्मा प्रोवाच, ततः प्रजापतिरधिजगे, तस्मादश्विनावश्विभ्यामिन्द्रः"—(सुश्रुतसू०, अ० १।२०)।

ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम्।
(चरकसू०, अ० १।४-५)

"तं पुण्यमायुर्वेदमनन्तमायुषो वर्धनमाधारमाप्यायनममृतमश्विभ्यां कः प्रददौ, ताविन्द्राय"—(काश्यप० विमान०)।

अत्र च 'अश्विभ्यां कः प्रददौ' इत्यत्र 'क'शब्देन ब्रह्मा तथा प्रजापतिरित्युभावपि यद्यपि गृह्येते, तथापि तन्त्रान्तरसंवादादत्र 'क'शब्देन ब्रह्मा न ग्राह्यः, अपि तु दक्षः प्रजापतिरेव ग्राह्यः। अस्ति च दक्षप्रजापत्यर्थं 'क'शब्दप्रयोगो भागवतेऽपि पुराणे दक्षयज्ञविध्वंसप्रसङ्गे ब्रह्मा च विष्णुश्च "न कस्याध्वरमीयतुः" इत्यत्र।

एवञ्चायुर्वेदस्य दैव उपदेशो वर्णितो भवति।

## आयुर्वेदस्य लौकिक आर्श उपदेशः

कृतयुगे पृथिव्यादीनां सर्वगुणसमुदितत्वात् सस्यानि किल अचिन्त्यरस-वीर्य-विपाक-प्रभाव-गुणसमुदितानि बभूवुः। तदानीञ्च जनाः शौचसन्तोषतपःस्वाध्यायेश्वर-प्रणिधान-दानदमयमव्रतोपवासपरायणाः समधातवः, समाग्नयः, प्रसन्नात्मेन्द्रिय-मनसोऽभूवन्।

---

१. 'बृंहयति=वर्धयति प्रजा इति ब्रह्मा'। "वृधि वृद्धौ" (भ्वा० प० से०) अन्तर्भावितण्यर्थः। "बृंहतेर्नोऽच्च" इति मनिन्। बृंहयति वर्धते इति वा। (अमर० रामाश्रमी० १।१।१२६)

अपक्रान्ते च कृतयुगे[1] केचन प्राणिनो व्यावृत्तशीलाः, दंदशूकाः सञ्जाताः। ते हि जाठराग्निबलेन महतीमाहारमात्रामाददते स्म। तेषाञ्च शरीरगौरवभाराक्रान्तमभवत्। गौरवाच्च ते कर्मसु न रतिञ्चक्रुः, परिश्रान्ताश्चालस्यमनुभवन्ति स्म। सत्यालस्ये ते जीवनयापनाय समुचितं समस्तमेव सम्भारमेकत्रीकर्तुं प्रायतन्त। सञ्चयाच्च सञ्चितेषूपकरणेषु ममत्वमजायत। ममतापरिगतत्वाच्च लोभोऽपि समजनि।

त्रेतायुगे च लोभो वाहनीचकार मनुजान्। ततश्चाभिद्रोहः पदमाससाद। प्रवृद्धे चाभिद्रोहे जनाः सत्यभाषणे नैव मतिञ्चक्रुः। वितथभाषणाच्च क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामपारुष्याभिघातोद्वेगादिभिराक्रान्ता जनाः परिदेवयाञ्चक्रुः। क्रमशश्च पृथिव्यादीनां गुणा ह्रासमवापुः। अधर्माचरणाच्च प्राणिनां सस्यानि न तेषां शरीरोपष्टम्भाय प्राभवन्। क्षीयमाणगुणैश्चाहारैरविहितैश्च विहारैर्न प्राणिनो यथापूर्वमारोग्यमधिजग्मुः। शारीराश्च धातवो वैषम्यमभजन्। धातूनाञ्च वैषम्याज्ज्वरादिभिर्व्याधिराक्रान्तानि शरीराणि। प्राणिनाञ्चायुषो ह्रासोऽजनि।

तथा चान्तरायभूता रोगनिकराः शरीरिणां प्राणानपीडयन्। विविधैश्च [2]शारीरमानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिघातोपद्रवादिभिश्च विचेष्टमानान् मानवानभिसमीक्ष्य महामतयो महर्षयो नगाधिराजस्य हिमवत उपत्यकायां व्याधितानामार्तिप्रशमनाय[3] विमर्शमकार्षुः।

तत्र चानेकविधा महर्षयः समवेता आसन्। यमनियमव्रतपरा ब्रह्मज्ञानिनः, वैखानसाः, बालखिल्याः, [4]शालीना यायावराश्च यदाऽऽमयाभिभूता आह्निकेषु कृत्येष्वसमर्थतामनुभवाञ्चक्रुः, तदाऽमराधिपतिगुप्तं शिवं पुण्यमुदारं दिव्यौषधिप्रभवमतिशरण्यं हिमवन्तमुपजग्मुः।

ते चैवमनुचिन्तयन्ति स्म, यद् भूतलविधेयतायाः पुरुषार्थचतुष्टयोपलब्धिरेव परमं प्रयोजनम्। व्याधिजराविधुरेण च शरीरेण न तदवाप्तुं शक्यम्। अतोऽभ्युदयनिःश्रेयससाधकस्य शरीरस्य यथा नैरुज्यं भवेत्, तथाऽनुष्ठेयम्। धर्मार्थकाममोक्षमूलस्य चारोग्यस्योपलब्धय उपायश्चिन्त्यतामिति मतिमकुर्वन्। ध्यानावस्थितैस्तद्गतमनोभिश्च तैरधिगतं सर्वासामापदां प्रतीकारपरं पुण्यं शरण्यम्।

---

१. चरकसं०, विमान० अ० ३।२८–३०।

२. सुश्रुतसूत्र०, अ० १।४। ३. चरकसूत्र०, अ० १।६-२३।

४. चरक० चि० १, ४, ३।

ते च ध्यानचक्षुषाऽपश्यन् यदमराधिपती रोगप्रशमनोपायं वक्ष्यतीति। यतो हि स खलु शक्तो वर्तते। [1]अश्विभ्याञ्च भगवान् शक्र आयुर्वेदं प्रतिपेदे एव केवलम्, न तु कस्मैचिदायुर्वेदं दत्तवान्। अथ चेन्द्रोऽसंक्रामितविद्यत्वेन शिष्यार्थी, तथा च—"यो हि गुरुभ्यः सम्यगादाय विद्यां न प्रयच्छत्यन्तेवासिभ्यः स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इति।

अतोऽकृतशिष्यत्वेन शिष्यार्थित्वविशेषयोगाद् ब्रह्मादिभ्यो विशेषेणेन्द्र एव शरण्य इति।

सत्स्वपि जमदग्निवसिष्ठकश्यपादिषु महर्षिवर्येषु प्रवरसत्त्वाद् वीर्यसम्पन्नत्वाद् भरद्वाजः स्वयमेव शचीसंभोगव्यासक्तमप्युपासितुमात्मनि क्षमत्वं मेने। सहस्राक्षस्य सुराधिपतेः समक्षमुपस्थातुं न सामान्यजनाः प्रभविष्यन्तीति सञ्चिन्त्य ऋषिभिरनुज्ञातो भरद्वाजः शक्रमुपागमत्।

महर्षिवर्यं भरद्वाजञ्च वीक्ष्य सहस्रदृगमरगुरुरिन्द्रो ज्ञानतपोधनाय ब्रह्मविदे महर्षये स्वागतं व्याजहार। महर्षिश्च जयाशीर्भिरमरेश्वरमभिनन्दयामास, प्रोवाच च विनयावनतः। हे अमरप्रभो! सर्वप्राणिभयङ्करा व्याधयो जनान् भृशं पीडयन्ति, तत्प्रतीकारार्थञ्च क उपाय इत्याचक्षस्व।

शतक्रतुश्च प्रतिभावतस्तस्य महर्षेः शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशवर्ती विपुलां मतिं समवेक्ष्य, ब्रह्मादिगुरुपरम्परोपदर्शितमविप्लुतागमम्, सुमहद्यशस्विधीरपुरुषासेवितम्, [2]हेतुलिङ्गौषधज्ञानम्, स्वस्थातुरपरायणम्, शाश्वतं पुण्यतममायुर्वेदमल्पैरेव पदैः प्रोवाच। महामतिर्भरद्वाजश्चानन्तपारमायुर्वेदमचिरेणैव कालेन यथावज्जग्राह।

एवञ्च भुवि भरद्वाज एव प्रथमो महर्षिभिषक् तन्त्रप्रवर्तक इति निश्चिनुमः। भरद्वाजश्च सर्वप्राण्युपकारार्थाधीतायुर्वेदजनितधर्मवशात् तत्कालमेवामितमायुर्लेभे।

तेनायुरमितं लेभे भरद्वाजः सुखान्वितः।

(चरकसू०, अ० १।२६)

सोऽपि स्वाधीतमायुर्वेदं कार्त्स्न्येन ऋषिभ्यो प्रोवाच—

ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन्।
ऋषयश्च भरद्वाजाद् जगृहुस्तं प्रजाहितम्॥
दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः।

(चरकसूत्र०, अ० १।२६-२७)

---

१. चरकसूत्र०, अ० १।५ चक्रपाणिः।    २. चरकसूत्र०, अ० १।२४-२५।

[१]हारीते चात्रेयगुरुतया भरद्वाज उक्तः, "शक्रादहमधीतवान्—इत्यादिना,

मत्तः पुनरसंख्येयास्त्रिसूत्रं त्रिप्रयोजनम् ।
अध्यात्रेयादिपर्यन्ता विदुः सप्त महर्षयाः ॥
आत्रेयाद्धारीत ऋषिः...................... ।"

इत्यन्तेन ।

इत्थं च यद्यप्यात्रेयसम्प्रदायसंहितायाम् ( चरके ) न साक्षादुक्तं भरद्वाजशिष्यत्वमात्रेयस्य, तथापि समानतन्त्रहारीतसंवादादनुमेयमिति व्याचष्टे चक्रपाणिः ।

## सम्प्रदायद्वयम्

करुणापरायणोऽमराधिपतिः शल्यशालाक्यकायचिकित्साद्यष्टाङ्गेषु विभक्तमायुर्वेदं केनाप्येकेनाचार्येण दुरधिगमं मन्वानो मानवचिकित्सायाः सम्प्रदायद्वयं चकार । तत्र शल्यशालाक्यप्रधानमायुर्वेदं धन्वन्तरिपरम्परया, कायचिकित्साप्रधानं च भरद्वाजपरम्परयेति विभजयाम्बभूव ।

## भरद्वाजपरम्परा

महर्षिस्तु भरद्वाजो धीधृतिस्मृतिविज्ञानसमृद्धमुदारसत्त्वं पुनर्वसुमात्रेयं समग्रं कायचिकित्साप्रधानमायुर्वेदशास्त्रमुपदिदेश । आत्रेयश्च भगवान् [२]पाञ्चालक्षेत्रे द्विजातिवराध्युषितायां काम्पिल्यराजधान्यां कृताश्रमः सर्वभूतानुकम्पयाऽग्निवेश-भेल-जतूकर्ण-पराशर-हारीत-क्षारपाणिनाम्नः षडन्तेवासिनः समग्रमायुर्वेदं प्रददौ ।

ते चाग्निवेशप्रभृतयः स्वस्वबुद्ध्युत्कर्षानुसारं स्वस्वनामाङ्कितं भेलतन्त्रं जतूकर्णतन्त्रमित्यादिकं निर्मिमिरे । तानि च तन्त्राणि ऋषीणां सन्निधौ श्रावयामासुः ।

बुद्धेर्विशेषस्तत्रासीद् नोपदेशान्तरं मुनेः ।
तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत् ॥
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।
श्रावयामासुरात्रेयं सर्षिसंघं सुमेधसः ॥
( चरकसूत्र०, अ० १।३१–३३ )

अस्यां च परम्परायामग्निवेशसंहिता, भेलसंहिता, जतूकर्णसंहिता, पाराशरसंहिता, हारीतसंहिता, क्षारपाणिसंहिता, खरनादसंहिता, विश्वामित्रसंहिता, अगस्त्यसंहिता, अत्रि-

१. चरकसूत्र०, अ० १।३०–३१ चक्रपाणिटीका ।
२. चरक० विमान०, अ० ३ ।

संहिता चेति कायचिकित्साप्रधानतन्त्राणि गवेषणापरायणैराचार्यै[1]र्लब्धपरिचयानीत्यवगम्यते ।

आत्रेयकालीनकायचिकित्साचार्याणां नामानि तु [2]चरके प्रागेवोपन्यस्तानि ।

कायचिकित्सायां समुपलभ्यमानग्रन्थेषु चरकसंहिता-सुश्रुतसंहिता-अष्टाङ्गहृदयसंहिताः मुख्याः । अष्टाङ्गसंग्रह-शारङ्गधरसंहिता-भावप्रकाश-वङ्गसेनसंहिता-आयुर्वेदसंग्रह-चक्रदत्त-योगरत्नाकर-योगतरङ्गिणी-भैषज्यरत्नावलीप्रभृतिग्रन्थास्तदुपजीविनः संग्रहमात्राः । निघण्टु-निदानादिग्रन्थास्तु रोगविज्ञानाद्येकदेशपराः । रसरत्नसमुच्चय-रसरत्नाकर-रसेन्द्रचिन्तामणि-रसेन्द्रसारसंग्रहादिरसग्रन्थास्तु दैवानुकूल्यादद्यापि चिकित्साकर्मसु महनीयमनुग्रहं विदधति ।

## धन्वन्तरिपरम्परा

महेन्द्रो मनीषी शल्यप्रधानमायुर्वेदं धन्वन्तरिपरम्परया प्रवर्तयाञ्चकार । सुश्रुते च "साक्षाद् देवेन्द्राद् धन्वन्तरिरधिजगे" इत्युक्तम् । तथा हि—"इन्द्रादहम्, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः" ( सुश्रुतसूत्र०, अ० १, २० ) ।

अत्र चक्रपाणिः—"इन्द्रादहमिति इन्द्रस्यासंक्रामितविद्यत्वेन शिष्यार्थितया तत आयुर्वेदग्रहणं धन्वन्तरेः । उच्यते हि–सम्यग् गुरुमुखादधीत्य विद्यां यो न प्रयच्छत्यन्तेवासिभ्यः, स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इति ।

यद्यपि—

तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।
काशिराजो महाराजः सर्वरोगप्रणाशनः ॥
आयुर्वेदं भरद्वाजात् प्राप्येदं भिषजां क्रियाम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥

( हरिवंशे अ० २६ )

इति हरिवंशोल्लेखात् तथा महाभारत-वायुपुराण-ब्रह्माण्डपुराणादिषु भरद्वाजादायुर्वेदाध्ययनं धन्वन्तरेः प्रस्तूयते, तथापि—

अहं धन्वन्तरिर्भूत्वा अधिगम्य महत्त्वतः ।
आयुर्वेदं करिष्यामि मर्त्यलोकं निरामयम् ॥ इति ॥

( ग० पु० १।२०४।१ )

---

१, प्रत्यक्षशारीरोपोद्घाते, २३ पृष्ठे ।　　२. चरक सू०, अ० १।८-१३ ।

